# संगमनी

# Sangamani

Sanskrit Quarterly

**संस्कृत-त्रैमासिकी**

चतुर्थवर्षे प्रथमद्वितीयावङ्कौ

२०२५ वैक्रमाब्दः



सम्पादकः

**प्रभात शास्त्री**

सहसम्पादकौ

तारिणीश झाः | डा० जयशङ्कर त्रिपाठी



प्रयागस्थ-संस्कृत-साहित्य-परिषदः प्रकाशनम्

कार्यालयः

संगमनी

दारागंज—प्रयागः

वार्षिकं मूल्यम्

रु० ५.००

प्रत्यङ्कम् रु० १.५०

परामर्श-समज्या

डा० हरवंशलाल शर्मा (अलीगढ़म्)

श्रीबालकृष्णरावः (प्रयागः)

श्रीकमलापति मिश्रः



लक्ष्यं योजना च

- इयं संगमनी संस्कृतस्य निःस्वार्थसेवाया नामान्तरम्।
- अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्णलेखानां परिचर्यायाश्च प्रकाशनम्,
- संस्कृतभाषाया अप्रकाशितग्रन्थस्य च प्रकाशनम् भवति।
- अनया संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्नो विधीयते।

# संगमनी

अहं राष्ट्री संगमनी वसूनाम्

—ऋग्वेदे १०।१२५।३

४ वर्षे (VoL. IV) * संवत् २०२५ * (No. 1-2) १-२ अङ्कौ

## भगवान् वराहावतारः

*

सेयं चन्द्रकलेति नागवनितानेत्रोत्पलैरर्चिता
मद्भारापगमक्षमेति फणिना सानन्दमालोकिता ।
दिङ्नागैः सरलीकृतायतकरैः स्पृष्टा मृणालाशया
भित्त्वोर्वीमभिनिःसृता मधुरिपोर्दंष्ट्रा चिरं पातु वः ॥

—केशवस्य

येनाधोमुखपद्मिनीदलधिया कूर्मश्चिरं वीक्षितो
घ्रातो येन मृणालमुग्धलतिकाबुद्ध्या फणिग्रामणीः ।
यः शालूकमिवोद्दधार धरणीबिम्बं पुनीतादसौ
त्वामेकार्णवपल्वलैकरसिकः क्रीडावराहो हरिः ॥

—कस्यचित

सूक्तिसिद्धानां प्राक्तनकवीनाम्



# शरभकाव्यम्

अपि मृगपतिना करीन्द्रकुम्भ—
स्थलदलनोद्गतपौरुषेण यस्य ।
भयचकितदृशा प्रनष्टमुच्चैः
स हि शरभीकुलराजचक्रवर्ती ॥

—माधवस्य

उन्मुक्तक्रमहारिशैलशिखरात्क्रामन्तमन्यो धरः
कोऽत्र त्वां शरभीकिशोरपरिषद्धौरेय धर्तुं क्षमः ।
तस्मादुद्गमकेलिलङ्घनकलादुर्वीतलादुद्व्रज-
त्वद्वासाय स एव कीर्तिकनकज्योत्स्नो गिरीणां पतिः ॥

—वल्लणस्य

यस्यानुद्धुरगन्धवातकणिकातङ्कार्तिनानादरी—
कोणोदञ्चदुरोनिगूहितशिरःपुच्छा हरीणां गणः ।
दृप्यद्दुर्जयगन्धसिन्धुरजयोत्खातेन का मे स्तुतिः
स्मेरोयं शरभः परां हृदि घृणामायाति जातस्मयः ॥

—वल्लणस्य

य: पृथ्वीवलयेषु विक्रमकथासीमास्थितिर्लाघव—
क्रीडान्यक्कृतमारुतिर्मृगपतेर्नि:सीमदर्पज्वर: ।
तादृक्तादृगुदञ्चदञ्चितचयैराश्चर्यकारी दिशा—
मीशानां शरभ: कथं स हि भवेदर्वाग्गिरां गोचर: ।।

—मकरन्दस्य

नखज्योत्स्नागुच्छस्नपितगजगण्डस्थलभिदां
मृगेन्द्राणां जेतुस्तव समरभूमीषु शतश: ।
हते वा नीते वा वत लघुतरां शोच्यपदवीं
शुनीनां नाथेऽस्मिन् सरभ रभस्यानवसर: ।।

—कस्यचित्

## जरत्सिंहः

*

नभसि चरतामम्भोदानां निशम्य रवं मना—
गनिभृतगुरुध्वानैर्यस्य प्रभिन्नमभूज्जगत् ।
वत परिणत: काल: कोऽयं करेणुघटाहत—
क्षितिरुहमटत्कारान्पार्श्वे शृणोति स केशरी ।।

—वैद्यगदाधरस्य

वदनमदशनं श्लथा नखानां
परिणतिरस्थिरघर्घरो निनाद: ।
इति वहति दशापदं मृगेन्द्रे वत
कलभैरुपभुज्यते तटीयम् ।।

—वैद्यगदाधरस्य

पण्डित केदारनाथ ओझा

•

# भारतीयदर्शनानि किमु राष्ट्रोन्नतेः प्रतिबन्धकानि ?

भारतीयानि हि दर्शनानि मोक्षोद्देशेन प्रवृत्तानि निवृत्तिमार्गोप-योगीनि न विदेशीयानीव समाजवाद-साम्यवाद-साम्राज्यवादादिमूलकतया राष्ट्रोपकारकाणि सन्ति ऐहिकोन्नतिसाधकानीति नैकविदेशीयशैलीशिक्षित-दार्शनिकसदस्सु परिशील्यते, तत्र ऐहिकोन्नतेर्न प्रतिबन्धकानि प्रत्युत मानवतासमुत्कर्षधिया साधकानीमानि भारतीयदर्शनानि इति यथाशक्ति संस्थाप्यते। सुखं जीवेच्चिरं जीवेद् ऋणं कृत्वा घृतं पिबेदित्याद्यनुसारं चार्वाकदर्शनं सुखान्वितं चिरजीवनमैहिकफलमेवोद्घोषयतीति तदितर-दर्शनानि विचारविषयीक्रियन्ते।

तत्त्वसाक्षात्कारोपयोगिशास्त्रत्वम्, तत्त्वसाक्षात्कारोपयोगिमननशास्त्रत्वम्, मोक्षोपयोगितत्त्वदर्शनजनकमनन-शास्त्रत्वम् इत्यादीनि दर्शनलक्षणानि प्रकृति-विचारानुपयुक्तानि नाश्रयामि किन्तु चरमपरिणामपर्यवसायिविचारपरम्परा-साधकशास्त्रत्वमिति दर्शनलक्षणमवलम्बे। तेन विदेशीयानि अपि दर्शनानि ऐहिकोन्नतेः साधनतया प्रसिद्धानि मोक्षस्पर्शं परिहरन्ति संगृहीतानि, तानि अवेक्ष्यैव भारतीयदर्शनेषु न्यूनता आपाद्यते अतस्तेषां सग्रह आवश्यकः, भारतीयदर्शनानामपि विचारपरम्परायाश्चरमपरिणामपर्यवसायितया नाव्या-प्तमिदं दर्शनलक्षणम्, चरमः परिणामो मोक्ष ऐहिकः समाजादित्यर्थः, चरम-परिणामस्य तत्तद्बुध्यधीनतया बुद्धिभेदेन दर्शनभेदो नापद्यते परमिष्यते, विदेशे बुद्धिभेदेनैव दर्शनानां बहुविधात्वं प्रसिद्धम्, अधुना भारतेऽपि गान्धिदर्शनं नेहरूदर्शनम् इत्यादि विशेषाणां प्राकट्योपक्रमः प्रचलत्येव। प्राचीनभारती-

यदर्शनन्तु मोक्षैकचरमोद्देश्यतया उपनिषद्गीतादिसमन्वयनियन्त्रितत्वाच्च नानियन्त्रिता संख्या, तथापि व्याख्यातृबुद्धिबलापेक्षया अवान्तरप्रस्थानभेदोऽनेकधा जागर्त्येव।

(१) तत्र प्रथमं मोक्षोद्देश्येन प्रवृत्तानां दर्शनानां कथमन्यत् फलं भवेत्? यवोद्देशेन प्रवृत्तस्य तदनुकूलमाचरतः कथं गोधूमलाभः? ननु तण्डुलोद्देशेन प्रवृत्तस्य कृषीबलस्य ब्रीहिभिः समं पुलालस्यापि लाभस्तेन वृषभस्य भोजनसमाधानम् एवमेव ऐहिकः संसारी मुमुक्षुर्मोक्षमार्गेऽग्रेऽसरन् संसारोन्नतिमपि संपादयिष्यतीति चेन्न पुलालब्रीह्योर्यथा नान्तरीयकभावस्तथा राष्ट्रोन्नतिमोक्षयोर्नास्ति राष्ट्रोन्नतिमन्तरापि मोक्षस्य सम्भवात्। मोक्षार्थमपि मुमुक्षूणां सभ्यसमाजः समाजस्य सुखशान्तिः, ततश्च सद्गुरव उपदेष्टारः, सत्सङ्गमण्डली, दर्शनसाहित्यम् निवासस्थानम्, जलप्रकाशादीनां सुप्रबन्धो भिक्षालाभप्रभृतयोऽपेक्षिताः, एते च राष्ट्रोन्नतिमपेक्षन्ते, तथा च मुमुक्षूणामपि अवश्यं विधेया राष्ट्रोन्नतिः, धान्यपुलाकन्यायेन मोक्षसाधनसामग्रावान्तरीयकी राष्ट्रोन्नतिः। एवमेव विजयार्थ राज्यस्य सैनिका राज्यान्तरेषु गच्छन्तः सामग्रानयनाय मार्गं निर्मिमीते, नदीं पाटयन्ति, सेतुं बध्नन्तिः वनानि विनाशयन्ति, चलन्ति चाग्रे, गतेषु च सैनिकेषु जनपदाया अन्ये तेन मार्गेण गच्छन्ति सर्वं कार्यञ्च सम्पादयन्ति, तथा च विजिगीषवोऽन्येषां हितञ्च नावदधतोऽपि सैनिका यथाऽन्येषां हितं कर्म सम्पादयन्ति तथा मुमुक्षवो मोक्षानुकूलमाचरन्तोऽपि अन्येषां बुभुक्षूणां हिताय राष्ट्रोन्नतिं विधास्यन्ति न तां प्रतिभन्त्स्यन्ति।

(२) त्यागभावना हि मुमुक्षूणां प्रधानम्, न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरित्यादिश्रुत्या त्यागस्य आवश्यकत्वात्। साधनान्यपि मोक्षस्य कृते कार्ये मुमुक्षूणां हेयानि, हेये वस्तुनि न तादृशा अपेक्षाबुद्धिरासक्तिर्वा, आसक्तिमन्तरा च कर्मासंभवात् साफल्यानवाप्तेश्च न मोक्षमार्गो राष्ट्रोन्नतेरनुकूलः।

तथापि चिन्तनीयम्, तेन त्यक्तेन भुञ्जीथा इत्यादिश्रुत्या भोगस्यापि त्यागपूर्वकस्यैव विधानात्, न जातु कामः कामानामुपभोगेन शाम्यतीति गीतया निरवग्रहभोगस्य निन्दाश्रवणात्, न चैतन्मोक्षमार्गस्य विधानम् मोक्षे भोगस्य वर्जनात्, भोगार्थिनामेव भोगे त्यागपूर्वकत्वस्य विधानम्, गीताया अपि कामनाशान्तिः सुखं न कामानुसारी भोगः, भोगमात्रेण न कामनाशान्तिः किन्तु मनसोऽवधानेनेति तात्पर्यम्, तथा च त्यागपूर्वको भोगः मनसोऽवधानञ्च संसारिणामपि सुखाय न मुमुक्षूणामेव। अन्यथा भोगलम्पटाः शारीरिकमैन्द्रियकञ्च बलं विनाशयन्तो जगतो भारभूताः कथं जगदुन्नतये कल्पन्ते। तथा च मोक्षानुकूलं हानं मानवशक्तिसंवर्धनद्वारा देशसमृद्धये न तु अवनतये इति सिध्यति।

किञ्च एकस्य हानमपरस्योपादानं संसारिणां मुमुक्षूणाञ्च समानम्। संसारिणोऽपि एकं हित्वैवापरमुपाददते, द्वितीयसोपानारोहेण प्रथमं परित्यजन्ति, यौवनयोगेन बालतावियोगः, लाभमधिकमपेक्ष्य शाकविक्रयं विहाय पटविपणिः, एवमेव मुमुक्षवोऽपि श्रवणमननसिद्धये गुरून् आश्रमादींश्चोपाददते, निदिध्यासनाय च पाचो विग्लापनानि शास्त्राण्यपि परिहरन्ति, तथाच समाने अनयोर्हानोपादाने।

(३) मुमुक्षाया वैराग्यकवलितत्वात्, मुमुक्षवो हि इहामुत्रफलफलभोगमात्रविरक्ता न खलु कर्मस्वनुसज्जन्ते, विरक्ता हि किमपेक्ष्य किमपि कुर्युः? तथा च का आशा मुमुक्षधनैर्दर्शनैर्लोकहितस्य।

एतदपि आपाततः, भोगवैराग्यं मुमुक्षूणां न सर्वथा रागाभावः, मुमुक्षाया अपि रागरूपत्वात्, तत्त्वज्ञाने शान्तवातावरणे भोजने पानीये सदुपदेशे सतां विदुषां सङ्गे साधनसम्पत्तिप्रभृतिषु रागस्य जागरूकत्वात्, रागे संसारिमुमुक्षोरेतावानेव विशेषो यत्संसारी यत् किमपि स्वहितं पारिवारिकं जानपदीयं राष्ट्रियं वा हितमाचरति तेन साक्षात् परम्परया वा इह जन्मनि जन्मान्तरे वा सुखमवश्यं लिप्सति, मुमुक्षुस्तु भविष्यति सुखलिप्सां न बिभर्ति परं तत्त्वज्ञानस्य

अर्जनरक्षणे दयादाक्षिण्यादिवशादन्यस्य सुखं वा कथन्नाभिलषेद् येन राष्ट्रोन्नतिं न वाञ्छेत् ?

किञ्च वैराग्यानुरागौ नित्यसहचरितौ संसारिणां मुमुक्षूणाञ्च समानौ, संसारिणोऽपि प्रेक्षापूर्वकारिण एकस्मादपरज्यैव अपरस्मिन्ननुरज्यन्ति, प्रवेशिकां परीक्षां समुत्तीर्य तदर्थानां राजकीयसेवावृत्तिं तत्प्रयुक्तं सुखञ्च वैराग्येण परित्यज्य उपाधिपरीक्षायामध्येतुम् उत्तमसेवावृत्तिसमीहया आसज्जन्ते, व्यापारिणोऽपि स्वल्पलाभप्रदात् कार्याद् विरज्यैव उत्तमव्यापारे विशेषफलप्रदातरि आसक्ता भवन्ति, एवमेव मुमुक्षवः पूर्वपूर्वतरसाधनसम्पत्तौ प्रथमाद्विरज्य अग्रिमसाधनेषु अनुरज्यन्तः प्रवर्तन्ते। एष एव विशेषो यत् सांसारिका मोक्षसुखमजानानाः ऐहिकान्यतमसुखेषु विरागानुरागौ बिभ्रति, मुमुक्षवः सांसारिकसुखादुत्तमः मोक्षमभिप्रयन्तस्तत्र अनुरज्यन्ति, यावच्चमोक्ष-सुखमनिष्पन्नं तावच्छरीरेन्द्रियमनोबुद्धिधारिणोऽन्न-पान - वस्त्र-वसति-सत्सङ्ग-पठन-व्याख्यान-कलहाभाव-सम्पर्कि जन-सुखशान्ति-तत्साधनाद्यभिलाषिणस्तत्तत्साधनेषु यथासाध्ये श्रममाणाः संसारिणो नातिरिच्यन्ते, मुक्ताश्च न व्याप्रियन्ते मृताश्च संसारिणो यथा, तथा च मुमुक्षुसहायकानाम् एषां भारतीयदर्शनानां कथमैहिकोन्नतिविरोधः ?

(४) भोगानुरागमात्रविरागौ क्रमशः संसारिमुमुक्ष्वोर्विशेषः, भोगानुरक्ता हि संसारिणः सदैव तत्साधनेषु व्याप्रियन्ते, उत्तमकक्षायामधिजिगांसवो नान्तरीयकतया साधनतया च प्रथमां मध्यमाञ्च कक्षामाश्रयन्ति, प्राप्तायाञ्च उत्तमकक्षायां कृतकर्त्व्यतया तत् परित्यजन्ति न तु वैराग्येण, तत्फलभोगस्योत्तमफलभोगेन गतार्थत्वात्. न संसारिणां फलभोगविरागः, साधनस्य कस्यचिदननुष्ठानन्तु अशक्त्या उपायान्तरेणोपेयसिद्ध्या तत्फलभोगस्य फलान्तरभोगेषु अन्तर्गत्या च मुमुक्षायाञ्च सत्यां फलभोगविरागस्य जागरूकत्वात् सांसारिकवस्तूनां मोक्षसाधनतयैव न तु भोगसाधनतयोपादानम् बुभुक्षारहितानां कृते भोगसाधनवस्तूनां क उपयोगः ? इति का आशा मोक्षमार्गनिर्मापकैर्भोगभीरुभिर्दर्शनैरैहिकोन्नतेः ?

अत्रापि मुमुक्षूणां न सर्वथा भोगविराग इत्युक्तप्रायम्, अन्नपानादिना मुमुक्षापिपासाशान्तिप्रभृतिभोगा वर्तन्ते एव। अन्यदपि-सांसारिकवस्तूनामुपादानमुभयेषां समानम् एकस्य भोगस्य साधनतया अपरस्य मोक्षसाधनतया, उपादानन्तु अस्त्येव। उपादाने सांसारिकवस्तूनामुन्नयने न विशेषः, किञ्च भोगलम्पटा न जागतिकोन्नतिं सम्पादयितु शक्ष्यन्ति, कविकर्मणि संगीते राजनीतिमार्गे धनाद्यर्जने वैज्ञानिकाविष्कारे च समुन्नतिसम्पादका नैकविधभोगविरागा शारीरकं मानसञ्च कष्टं सहमाना मनसा सावधाना दरीदृश्यन्ते, अन्ये च तादृशात् कष्टाद् बिभ्यति। अत एव न भवन्ति समुन्नायका वा, तथाच यावच्छरीरधारणं संसारिणां मुमुक्षूणाञ्च संसारोन्नयने नास्ति विशेषः, मुमुक्षवश्च दर्शनपरिशीलिनो नानाविधशमदमादिसम्पत्तिशालिनो जागतिककर्मसु अपि कुशला भविष्यन्ति।

(५) मुमुक्षूणाम् एषणात्रयपरित्यागः समुद्योगप्रतिबन्धक इति विशेषः। लोकैषणा वित्तैषणा पुत्रैषणेति तिसृभिरेषणाभिर्भृषिता हि मानवास्तत्कर्मसु प्रवर्तमाना जागतिकवस्तूनि समुन्नयन्ति, केचन यशः समीहया अन्ये भोगाय धनेच्छया अपरं उभयलोकतितीर्षया सन्तानवाञ्छया सांसारिकव्यापारे सज्जन्ते, मुमुक्षवो हि किमभिप्रेत्य प्रवर्तेरन्। अत्रापि मुमुक्षयाऽपि प्रवृत्तिरिति लिखितप्रायम्, बहवो दार्शनिका ज्ञानकर्मसमुच्चयवादिनः कर्मणामुपयोगं मोक्षेऽपि वर्णयन्ति, अन्येऽपि तत्त्वज्ञानार्थं कर्मणामावश्यकतामामनन्ति, कर्मणामुपयोगे सांसारिकवस्तूनामुपादानं समायातम् एव। सर्वाणि वस्तूनि शरीरिणामुपभोगाय मुमुक्षवोऽपि शरीरधारिणः।

एवम् एषणात्रयविभिन्नापि एषणा लोककल्याणैषणा नाम। यस्य-सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः, सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्, इत्यादि भावना। अथवा लोकैषणा द्विविधा–यश एषणा लोककल्याणैषणा च। यथा वा-यद्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः। मम वर्त्मानुवर्तन्ते पृथिव्यां सर्वमानवाः। इत्यादि गीतानुसारं स्वस्य फल-

भोगेच्छाविरहेऽपि लोककल्याणार्थमेव कर्मानुष्ठानम्, लोकनायका अपि लोककल्याणैषणया परमोत्साहेन कर्माणि कुर्वन्तः सफला भवन्ति, ये च यशोलिप्सया जनताहितं साधयन्ति न ते तादृशाः सफला व्यापारिणो विडम्बिनश्च लोके भण्यन्ते, तथा च लोककल्याणैषणया कर्तव्यनिष्ठाया महत्त्वम् फलप्रदत्वञ्च, मन्ये जनताजनार्दनसेवया एवैत्र ईश्वरार्पणबुद्धिः, एवञ्च लोककल्याणैषणया मुमुक्षवोऽपि जगदुन्नेष्यन्ति ।

(६) शमदमादिसम्पत्तयो हि न मुमुक्षामात्रसम्पत् किन्तु मानवता-सम्पत्तिः, इन्द्रियाणां निग्रहः शीतातपादिद्वन्द्वसहनं मनसोऽवधानञ्च समेषु कर्मसु अपेक्ष्यन्ते, भोगलम्पटाः चञ्चलमनसः सुकुमारशरीराः स्वशरीररक्षा-भारमन्येषां स्कन्धे स्थापयन्तो धरण्या भारभूता न कार्यधुरन्धराः । एवञ्च दर्शनाहिता मुमुक्षूणां बहवो गुणा मानवताभूषणा कर्मनिष्ठाया जीवातव इति दर्शनानां प्राधान्यं जगदुन्नयने । मानवता च धृतिः क्षमा दमोऽस्तेय-मित्यादि दशानां गुणानां मानवेषु समन्वयः ।

(७) दार्शनिकपदार्थपरिशीलनेन आत्मनो विभुत्वभावनया अहन्ताया ममतायाश्च विस्तारो जायते, यद्यपि अनयोरपसारणं दर्शनानामुद्देश्यम्, परं तदपसारणं न सहसैव सम्भवति किन्तु सामग्रीसंपत्क्रमेण, श्रवणमननाभ्यां निर्दोषशुद्धबिम्बात्मनः परोक्षभावनायां दृढतां नीतायाम् अहन्ताममतयो-र्विस्तार एव जायते न तु समुच्छेदः, अपरोक्षभ्रमरूपयोस्तयोस्तत्त्वप्रत्यक्ष-मन्तरा परोक्षात्मज्ञानेनानिवृत्तेः । विस्तारोऽप्ययं प्रदीपज्वाला-विस्तार इव समुच्छेदप्राग्वर्ती, परोक्षयाऽपि दृढात्मभावनया संकोचो निवर्तते । विस्तार-स्यास्य दिक्प्रदर्शनं ब्रह्मसूत्राध्यासभाष्ये पुत्रकलत्रादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वा इति शङ्कराचार्यभगवद्भिः कृतम् । शरीरेन्द्रियादिषु साक्षाद् अहन्ताममते, शरीरसम्बन्धात् पुत्रकलत्रधनादिषु ततोऽपि परम्परया सपिण्डकुटुम्बादिषु प्रसरतः । दार्शनिकानां समेषु मानवेषु सादृश्यवशात्तयोर्विस्तारो जागर्ति, शुनि चैव श्वपाके च पण्डिताः "समदर्शिन-

इत्यादिरीतिः सर्वेषु मानवेषु जीवेषु वा प्रेमा प्रजायते, एषैव अवस्था भूतदया उदारता प्रभृतिभिर्व्यवह्रियते। एषाऽवस्था किमपि फलमनपेक्ष्यैव जायते स्वाभाविकी सोच्यते, सा अतीवश्रेयस्करी क्रमशो मोक्षाय कल्पते जगतः समुन्नतये च। कुत्रचिद् यशो लोभमन्तर्निधाय जायते ततोऽपि नेतारो भवन्ति। एषा यशोलिप्साऽपि लोकैषणापुत्रवित्तैषणयोः शिथिलतायामेव विजयते, ललनालालनलुब्धस्य सुते वित्तेऽपि उपेक्षा जायते, पुत्रकलत्रादिपरिपालन-परवशस्य क्वास्ते यशोऽर्जनावसरः? पुत्रवित्तैषणयोः शिथिलतायां दार्शनिक-भावनायाः साहाय्यम्। एवमेव यशएषणायां क्रमशो निर्बलायां सत्यां लोक-कल्याणैषणा विजृम्भते, एषा यथा सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि इति-भावयतो मुनेर्भवति तथा यथाऽहं मम प्रियस्तनयो वा शरीरप्राणधारी दुःखान-पेक्षी सुखार्थी तथा इमे समे मानवा इत्यादि सादृश्यभावनाप्ररूढो ममता-विस्ताररूपः संसारिणो दार्शनिकस्यापि। तिसृषु एषणासु संकुचितास्वेव एषा लोककल्याणैषणा जागर्ति, संकोचे च दार्शनिकभावना अवलम्बः।

(८) सत्यम् अहिंसा च मानवतेति दशधर्मलक्षणवर्णनम् चिरन्तनी सूचना, गान्धिमहात्मना च द्वयमिदमाचरितं जनतायां पुनः प्रतिष्ठापितञ्च, तदनु-यायिन आधुनिकाः संगठनद्वारा राष्ट्रोन्नतेः साधिके सत्याहिंसे इति उद्घोष-यन्ति, असत्यवादिनोऽसत्याचारा हिंसकाश्च न भवन्ति मुमुक्षवः, न च दर्श-नानि असत्यहिंसे उपादेयतया वर्णयन्ति, किन्तु सत्याहिंसे मानवता, मानवता-मन्तरा च पशुतया न मोक्षेऽधिकारः, मानवतामादायोपक्रमन्ते दर्शनानि न पशुताम्। भयादिष सत्याद्भ्रंसते, एषणात्रयविमुक्तस्य शरीरानपेक्षिणो-मुमुक्षोः कुतः स्याद्भयम्, इष्टापहाराच्च भयं भवति यथा मुमुक्षोर्मोक्षेतरन्नेष्टं तथा कर्मठस्य मानवस्य कर्मपूर्तेरन्यन्नेष्टम्, क्वचिच्च मनसो विनोदाय परिहासादिषु असत्यभाषणं विद्वांसोऽपि विदधति परमवहितमनसो न विनोदा-पेक्षा, इष्टापहारिणो हिंसा क्रियते, मुमुक्षोः किमिष्टम्? यस्यापहारो भवेत्, समाजसेवामात्रमभिलषतः कर्मनिष्ठस्य कर्मैव इष्टम्, 'सर्वभूतस्थमात्मानं

सर्वभूतानि चात्मनि' इति भावयतः कस्माद्भयम् ? द्वितीयाद् वै भयं भवति, अन्यस्मिंश्चद्वेषः, द्विट् च हन्यते ।

(६) सांख्यं हि रजस्तमसोरभिभवेन सत्त्वोपचयं शिक्षयति,

विषमावस्थिते दैवे पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं सत्त्वोपाश्रयिणोनराः ॥इतिभारतवचः सत्त्वोपाश्रस्य विषादाभावं फलमुद्घोषयति । विषादाभावो हि ऐहिकं फलम्, विषादाभावं विना कर्मनिष्ठता न समुदेति, विषादश्च समेषां कर्मणामन्तरायः, विषादाभावं विना मुमुक्षा हि बालस्य चन्द्रग्रहणगर्धा, सत्त्ववृद्धिः सत्त्वशुद्धिर्वादार्शनिकी सम्पत्, तया मानवतोत्कृष्यते, सर्वविधायिनी सा शक्तिः, सर्वं शिवं सुन्दरं कर्तुं क्षमते, किमुत लोकोन्नतिं समाजं राष्ट्रं वा, मानसी एषा सम्पत्तिः, अन्येन मनसा कथं परिचीयेत ?, दर्शनवासनावासित-मनोवृत्तीः केचन क्वचित् परिचेष्यन्ति । अधुनाऽपि केचन व्यवहारिण उपदेशकाः लोकनायका राज्याधिकारिणो वा भवेयुः, विविधापदाऽपि कर्तव्यमार्गान्न च्यवन्ते, आपदि धैर्यं धारयन्ति, बलवता लाभेनापि न उन्मदन्ते, कर्तव्यनिष्ठतया सुखेनानुतिष्ठन्ति फलञ्चाप्नुवन्ति । काममस्य सत्त्वसंचयस्योद्देश्यं व्यापारः पाण्डित्यप्रसारः सदाचारप्रचारो लोकसंग्रहः समाजसंगठनं शान्तिपूर्णं जीवनयापनं क्रमिकमुक्तिमार्गेऽग्रेसरणं वा भवेत्, एतादृशा हि मानवा अनुचिते मार्गे न प्रचलन्ति, चौर्याद्बिभ्यति न रक्षिपुरुषेभ्यः, अधिकव्ययाद्विरमन्ति, अनुदारताप्रवादञ्च सुखं सहन्ते, याचनायाः पराजयन्ते नहि कष्टेन जीवनयापनात्, आत्मदोषान् पश्यन्ति न परदोषगणनया समयं यापयन्ति, नम्रतया विभूष्यन्ते नाभिमानेन महत्तां नीयन्ते ।

अतएव शासकस्या पिदार्शनिकतामभीप्सन्ति बहवः—यथा नीतिवाक्यामृते श्री सोमसूरिः—प्रकृतिपुरुषतत्त्वज्ञो हि राजा सत्त्वबलमवलम्बते, रजःफलं चाप-

लञ्च परिहरति, तमोऽभिर्नाभिभूयते, इत्यादिः। इन्द्रियजयादिः सत्त्वसंचयस्य सोपानम्, तत एव शासकस्य कृते सोऽपि अभिप्रेयते यथा श्रीमद्भागवते—

यस्यात्मानुवशश्चेत् स्यात् सर्वे तद्वशगा इमे
लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः ॥
एवं मनुरपि—इन्द्रियाणां जये योगं समातिष्ठेद् दिवानिशम्।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः।



## एकः श्लोकवरः

एकः श्लोकवरो रसौघमधुरो हृद्यः सतां सत्कवे—
र्नेवेष्टः कुकवेः प्रलापबहुलः कृत्स्नः प्रबन्धोऽपि वा।
वक्रोक्त्या वलितः सहासरभसः पौराङ्गनाविभ्रमो
हर्षोत्कर्षकरो यथा नहि तथा ग्रामीणवध्वा रतम् ॥

"कविवरराजानकरत्नकण्ठस्य"



पण्डित बटुकनाथशास्त्री खिस्ते

# कालिदासपद्येष्वलङ्कारदोषविवेकः

कविकुलगुरोः कालिदासस्य सरस्वतीनिःश्वसितप्रायेषु पद्येष्वलङ्कारसन्निवेशेषु क्वाऽपि काऽपि त्रुटिरस्ति नवेति परीक्षणस्पृशा दृशा किञ्चिदिदं विशेषदृशां विदुषां मनोविनोदाय समुपन्यस्यते।

ध्वनिप्रस्थापनपरमाचार्येण आनन्दवर्धनेन ध्वनिकाव्ये रसावहितचेतसः सुकवे रचनायां रसप्रवाहसहकृत एवाऽलङ्कारः स्वयं स्वरूपमुपलभते इत्युपपादितम्।

रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः॥

इत्युक्त्या 'अपृथग्यत्ननिर्वर्त्यत्व' मलङ्काराणां सौन्दर्यस्य साधकं भवतीति निरणायि। एवमलङ्काराणां प्रबन्धे यथोचितसन्निवेशाय समीक्षा-सरण्युपवर्णिता—

विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन।
काले च ग्रहणं त्यागौ नातिनिर्वहणैषिता॥

इत्यादिकारिकां विरचयता। तदुदाहरणतया शाकुन्तल-विक्रमोर्वशीयादिपद्यान्यपि समुपात्तानि। सर्वमेतद् रसप्राधान्यसिद्धान्तानुरोधेन समीचीनमेवाऽस्तीति तत्र न किमपि क्षोदक्षमम्।

यत्तु, श्रुतिकटुत्वादिदोषप्रतिपादनानन्तरमेते दोषा एव क्वचिदलङ्कारवैगुण्यं जनयितुमीशते इत्यलङ्कारदोषा न पृथग्भूता इत्यादि मम्मटादीनां विमर्शः,

तदनुसारं कालिदासीयेषु पद्येष्वप्युपमाद्यलङ्कारसन्निवेशनविघटकाः केऽपि दोषा दरीदृश्यन्ते। तत्र कांश्चन स्थालीपुलाकन्यायेन परीक्षितुं विचार्यते किञ्चित्। कुमारसम्भवे प्रथमसर्गे।

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च॥

पद्येऽस्मिन्मालोपमामुपनिबध्नाति कविः। तत्रोपमेयांशे 'तथा स पूतश्च विभूषितश्च' इत्यस्मिन् विशेषणयोगो नाऽस्ति, उपमानेषु त्रिषु द्वयोः सविशेषणत्वं एकस्य तु निर्विशेषणत्वं दृश्यते।

तस्मादत्र विशेषणाऽऽधिक्याद‌धिकपदत्वं दुर्वारम्। एतन्निराचिकिर्षया मल्लिनाथः प्राह—अत्र शिखागिरोरविशिष्टयोरुपमानाऽनर्हत्वान्नाऽत्र विशेषणाधिक्यदोषः इति। एतत्तु मुखमुद्रणमात्रमाभाति।

'शिखयेव दीपः' एतावन्मात्रोक्तौ न हीयते सादृश्यचमत्कृतिः, व्यङ्ग्यानामुऽऽज्ज्वलत्व–स्वर्णसवर्णत्वादिधर्माणामीषदनुभवोऽपि नाऽनरुद्ध्यते, वाच्यवृत्त्या तु पूतत्व-विभूषितत्वयोः सम्बन्धः स्फुट एव। तस्मात् 'प्रभामहत्या' इति विशेषणं व्यर्थमेव।

'आत्मा वै पुत्रनामाऽसि' इत्यादिश्रुत्या पुत्रपदस्य दुहित्रादिपरत्वकल्पनया च हिमवत्पार्वत्योरिव प्रदीप-शिखयोः स्वरूपतः साम्यं समीचीनमस्तीति तयोरुपमेयत्वमुपमानत्वञ्च स्थाने। किन्तु येन धर्मेणाऽलङ्कारसौन्दर्यं निष्पादनीयं स तु नोभयतः सङ्गच्छते। आदिशक्त्यवतारत्वेन पार्वत्या पर्वतराजस्य पूतत्वं साधु, परं शिखया दीपस्य पूतत्वमश्रुतचरमचमत्कारकारि चेति कथमुपमा संपद्यताम्? इत्थमेव द्वितीयो विभूषितत्वरूपो धर्मः कथमत्र सन्निवेशनीयः? भूष्य-भूषकयोः पार्थक्य एव विभूषितत्वव्यवहारः पदं लभते नान्यथा। दीपस्य शिखाभिन्नत्वेन कथमत्र तस्य प्रतीतिः। शिखया दीप इति व्यवहारस्तु 'राहोः शिर' इति वदुपपादनीयतामपेक्षते।

हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः।

इत्यालङ्कारिकनियमादुपमानोपमेयोभयद्वयसम्बन्धस्यैव उपमालङ्कारता नेतरस्य। सत्स्वपि नानाविधेषु धर्मेषु पुरःस्फूर्तिक-चमत्काराधायक-धर्मेणैवाऽलङ्कारस्वरूपमुद्भाव्यते। एवमत्र पूतत्वविभूषितत्वयोरसङ्गतिः स्फुटा।

एवमग्रेऽपि 'संस्कारवत्येव गिरा मनीषी' इत्युपमाने-'मनस ईषा मनीषा साऽस्याऽस्तीति मनीषी विद्वानिव। शकन्ध्वादित्वात्साधुः'। इति मल्लिनाथ-प्रदर्शितरीत्या मनीषिपदात् विद्वद्रूपेऽर्थे संपन्ने तादृशस्य पुरुषस्य वाचः संस्कारशालित्वं स्वभावसिद्धं भवेदेव न ततः 'संस्कारवत्या' इति विशेषणस्य काऽप्यपेक्षा। तस्मादत्राऽपि अधिकपदत्वं नाम दोषः कृतपद एवेति शक्यते वक्तुम्।

सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताऽधिवाचि॥

इत्यस्मान्मन्त्रादपि मनीषिपदप्रयोगस्तदीयगिरां संस्कारशालित्वं निश्चेतुं सुशकम्।

इत्थमेव स्थलान्तरेऽपि विदुषां कटाक्षनिक्षेपः काम्यते—

सा हि प्रणयवत्यासीत्सपत्न्योरुभयोरपि।
भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः॥

इति रघुवंशदशमसर्गस्थे श्लोके पुत्रजन्मनिमित्तं यागे संपन्ने भक्षणीयश्चरुः कौसल्याकैकेयीभ्यां सुमित्रायै प्रेम्णा प्रादायीति सन्दर्भः। तत्रोपमालङ्कारसौन्दर्यमुद्भावयति कविर्भ्रमरीवृत्तान्तेन।

अत्रोपमालङ्कारसामग्री न पूर्णा किन्तूपमेयांशे काऽपि त्रुटिरवशिष्यते। तद्यथा—उपमेयभागे सुमित्रा द्वे तत्सपत्न्यौ उपमानभागे तु भ्रमरी वारणः, तस्य मदनिष्यन्दरेखे चेति वारणपदार्थसन्निवेशादाधिक्यमवभासते। एवम-

त्राऽपि न्यूनपदत्वनामा दोषः पूर्ववदेव उत्कन्धरः प्रतीयते । प्रणयवत्त्वं नृभया-नुगतः समानो धर्मः ।

अत्रोत्तरार्धे प्रतिपाद्यस्य वारणस्य बिम्बस्थानीयो राजा दशरथो नोक्त इत्येतद्दोषस्य मूलम् । अत्र मल्लिनाथः 'समान एकः पतिर्ययोस्तयोः सपत्न्योः ।' 'नित्यं सपत्न्यादिषु' इति ङीप् । सपत्न्योरित्यत्र समासान्तर्गतस्य पत्युरुपमानं 'वारणस्येति' । इत्येवं विवृण्वन् पत्युरभावेऽपि सपत्नीशब्दान्तर्गतपतिसम्बन्ध-मात्रेण तत्सद्भावं व्यवस्थापयितुं चेष्टते ।

परं नेदं हृदयग्राहि । पत्युः साक्षात्प्रतिपादकस्य शब्दस्याऽसत्त्वे न्यूनपदत्वं गले पतितमेव । 'शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते' इति नियमात् दशरथ-वाचकस्य यत्किञ्चित्पदस्याऽभावादलङ्कारस्याऽप्यसङ्गतिरनुभवसिद्धा कथं निषिद्ध्यताम् ?

यद्यपि 'सपत्नी' शब्दे पत्युः सम्बन्धः प्रतीयते, किन्तु तावता पत्युः प्रतीतिर्न भवति । सम्बन्धो हि सम्बन्धिभ्यां भिन्न इति नियमादपि सम्बन्धमात्रेण तत्प्रतीतिरशक्यैव । न चास्या उपमाया उपमेयलुप्तायामन्तर्भावो भवितुमर्हति 'सपत्नी' शब्दादंशतः पतिपदार्थप्रतीतिसत्त्वात् । सप्तविधासु लुप्तोपमासु द्विलुप्तायामुपमेयवाचकयोर्लोपेन 'क्यच्' प्रत्ययमात्रे तदुपलब्धिः ।

'स सहस्रायुधीयती' त्यादि तदुदाहरणे कर्मपदात् आचारार्थे क्यच् प्रत्ययविधानादुपमेयवाचकयोर्लोपः । सहस्रायुधमिवाऽऽत्मानमाचरतीति विग्रहे कर्मभूतस्याऽऽत्मनो लोपः । न पुनरत्र तादृशी स्थितिर्यद्वशात् उपमेय-लोपः कल्पनीयो भवेत् । यथातथा वा भवतु—उपमानोपमेययोः समानविभ-क्तिकत्वं शब्दोपात्तत्वमावश्यकं भवतीति पद्येऽस्मिन् उपमालङ्कारो न भवितुं समर्थ इति स्फुटतरमिदम् । एवं प्रसिद्धैर्लेखकैर्ग्रन्थकारैश्चाऽपरिशीलितेषु कालिदाससूक्तिकदम्बकेषु विमर्शः प्रवर्तनीय इति धिया स्वल्पमिदं लिख्यते न तु दोषैकदर्शिता पैशुन्येनेति मर्षयन्तु ममातिक्रमं दोषज्ञा इति शिवम् ।

श्री प्रभातमिश्रः साहित्याचार्यः

*

# वेणु-स्वनः !!

१

तदेव पृथिवीतलं प्रिय ! तदेव वृन्दावनं
सलील-सलिला नदी तव च सैव सूर्यात्मजा।
तथाऽपि भव-तारणं सकल-संशयावारणं
किमत्र वद कारणं, नहि विभाति वेणुस्वनः !

२

"समीर इह सन्ततं वहति मन्दमन्दं मुदा
नदन्ति च वलाहका सजल-दर्प-संवाहकाः।
स एष रसिकोऽस्ति मेऽनुचरताङ्गतो मोहनो
यदीयमधुराधरे किल विभाति वेणुस्वनः"।।

३

हरन्ति मम मानसं क्वचन मञ्जुला वञ्जुला
मयूर-शुक-चातकाः क्वचन हंसकाशंसकाः"
गतैवमधिकाधिकां गतितर्तिं यदा राधिका
तदैव सहसा श्रुतं न हि विभाति वेणुस्वनः।

४

स पीत-परिधानवान् विमल-भानवान् मान-वान्
क्व हन्त! गतवान् महान् छल-पटुर्वटुः प्राणवान्।
यदीय-चरणं किलाऽस्ति शरणं मदीयं सदा
काय सह वद प्रिये ! स हि विभाति वेणुस्वनः !

५

"क्षणं कुरु न वर्षणं जलद ! हर्षणं मे कुरु
लयं मलय ! संव्रज प्रलयमन्ततो मा कृथाः ;
करोमि पदवन्दनं कुरु न चातक ! क्रन्दनं
शृणोमि हि यतोऽधुना क्व नु विभाति वेणुस्वनः?"

६

शृणोति जलदो न चेत्तर्हि शृणोति कृष्णोऽस्ति सः
सुगौरवदनाऽसि तच्छृणु वचो मदीयं सखि !
प्रभां मुष सुचञ्चले! स्थिर-घनाञ्चले मा व्रज
यतोऽद्य परिभावये क्व नु विभाति वेणुस्वनः !!

७

कदम्ब ! न विलम्बय व्रज कदम्बतां नैव भोः
तरङ्ग-निवहैः क्षणं वद मदम्ब ! कालिन्दिके !
मदेकरतिरञ्जनो दुरित-दुःख-सम्भञ्जनः
स लाकृति-निरञ्जनः क्व नु विभाति वेणुस्वनः ! !

८

चलन्ति चकिताननना नहि प्रियाश्चकोरास्तथा
स्थिरीभवति चञ्चलोऽपि पवने मनो मोदयन,
न रिङ्गति तरङ्गिणी किल यदीय-शोभा-रता
क्व हन्त ! सुषमामयो मम विभाति वेणुस्वनः ।

९

तमालक ! तमालय त्वमथ चेद् भवेद् दृष्टिगो
यदीय-विरहानले भवति मन्मनो मर्म्मरम् ।
तव प्रियतमा मया सपदि वीक्षिता राधिका
वदन्त्यथ पुनः पुनः क्व नु विभाति वेणुस्वनः ! !

१०

समेत्य सहसा तदा हृदि हठेन संयोजयन्
उवाच स मुहुर्मुहुः किल हरिर्मुदा, राधिके !
प्रसीद, विहस प्रिये ! न कुरु रोदनं, पश्य माम् !
य रेणुरिव ते पदे सखि ! विभाति वेणुस्वनः !

श्री काकुभाई दुर्गाशङ्कर दवे 'भानुः'

*

# आधुनिकसंस्कृतनाट्यकारः श्री मूलशङ्कर याज्ञिकः

संस्कृतनाट्यकारैः प्रायः पौराणिकविषयानधिकृत्यैव रचनाः निर्मिताः। पौराणिककथानां प्रभावो लोकजीवनस्योपरि चेत्तादृशः उत्कटः प्राचीनसमयतः अद्यावधि वर्तते यदस्माकं प्रादेशिकभाषास्वपि पौराणिककथानकान्येव मूलस्रोतरूपेण स्वीकृत्य सम्प्रत्यपि असंख्यरचनानां निर्माणं भवत्येव। अत्र प्रगतिसूचकं त्विदं यत् आधुनिकभाषाणां विशेषतः आङ्ग्लभाषायाः साहित्येन प्रभावितैः संस्कृतसाहित्यकारैः तादृशाः विषया अपि स्वरचनासु उर्वरीकृताः। येषां विदुषामाङ्ग्लभाषोपरि प्रभुत्वमासीत् तैः संस्कृतज्ञैः कतिपयानामाङ्ग्लभाषायां लिखितानां नाटकानामनुवादा अपि संस्कृते कृताः।

अत्राधिकप्रशंसनीयं त्विदं यत् कतिपयसंस्कृतज्ञाः मौलिकनाटकान्यपि व्यरचयन्। ईदृशानां नाटकानाम् प्रकारस्तु मुख्यतया 'ऐतिहासिकः'। एतादृशेषु विद्वज्जनेषु श्रीयुतमूलशङ्कर-माणेकलालयाज्ञिकमहोदयस्य शुभनाम गुर्जरप्रदेशनिवासिभिरादरपूर्वकं स्मर्तुं युज्यते। याज्ञिकमहोदयस्य जन्मस्थानं गुर्जरप्रदेशान्तर्गतखेडामण्डलस्थं 'नडियाद' नाम नगरम्। इदमतिप्राचीननगरं पुरा 'नटपुर'मिति नाम्ना विख्यातमासीत्। आङ्ग्लगणनानुसारेण इस्वी १८८३ तमवर्षस्य जनवरी मासस्य १३ तमा तिथिः कवेः जन्मदिनाङ्कः। अस्य साक्षररत्नस्य देहविलयः वर्षत्रयपूर्वमेव स्वजन्मभूम्यामभवत्। अयं महानुभावः तत्कालीन 'बडोदा' राज्ये बडोदानगर्यामेव महत्प्रगतिशीलेन

विद्याव्यासङ्गिना ख्यातनामनरेशेन दिवङ्गतेन महाराजसयाजीरावमहाभागेन संस्थापिते संस्कृतमहाविद्यालये प्राचार्यस्य पदमलङ्कृतवानासीत्। तस्मिन्नेव तस्य कार्यकाले अर्थात् इस्वी १६२६ तः १६३३ तमवर्षावधौ तिस्रः नाट्यरचनाः प्रकाशिताः। रचनानां संक्षिप्तपरिचयस्तु—

(१) 'छत्रपतिसाम्राज्यम्' नाटकम्। अस्मिन् १० अङ्काः सन्ति। पुण्यश्लोकछत्रपतिशिवाजीमहाराजस्य पावनजीवनस्य प्रमुखा घटना अधिकृत्य निर्मितस्य नाटकस्यातीवोपादेयताविषये याज्ञिकमहोदयस्य प्रयासः स्तुत्यः।

(२) 'प्रतापविजयम्' नाटकम्। अस्मिन् नाटके नवाङ्काः सन्ति। अस्मिन् मेवाडप्रदेशस्य प्रसिद्धहिन्दुकुलसूर्यस्य 'प्रतापसिंह महाराणा' महाभागस्य जीवनस्य प्रसङ्गा निरूपिताः।

(३) 'संयोगितास्वयंवरम्' नाटकम्। अस्मिन् नाटके प्रसिद्धहिन्दुसम्राट्-पृथ्वीराजचौहाणनरपतेः राजकुमार्याः संयोगितायाश्च प्रणयप्रसङ्ग आलिखितोऽस्ति।

मूलशंकरमहोदयस्य रचनाकौशलस्य भूरिप्रशंसायां तत्कालीनश्रेष्ठसंस्कृत-ज्ञानां—डॉ० गङ्गानाथझा-श्रीसुखथामकर—मि० बार्नेट महोदयानामभिप्रायाः पुस्तकेष्वेतेषु मुद्रिताः।

एतासां रचनानां विशिष्टता त्वियं यत् प्रत्येकं पुस्तकं नाटकस्थदृश्यानां मनोरमचित्रैरपि विभूषितम्। न केवलमेतावन्मात्रं किन्त्वधिकमिदं यत् कवेः सङ्गीतशास्त्रप्रावीण्यमपि प्रत्येकरचनायामत्युत्कृष्टरूपेण प्रतीतं भवति। अत्यन्तमधुरशास्त्रीयरागरागिणीषु रचितान्यनेकानि कर्णप्रियाणि गीतानि कविना योग्यस्थानेषु सन्निवेशितानि येन रचनानां मनोहारित्वं तु चरमसीमां प्राप्तम्। इदमपि निवेदयितुं कामये यत् प्रत्येकनाटकस्य नामाग्रे 'सङ्गीत'

शब्दस्य निवेशनं किञ्चिन्मात्रमपि नासङ्गतम्। इदं तु निःशङ्कं वक्तुं शक्यते यत् सङ्गीतप्रधानानि ईदृशानि नाटकानि महत्प्रयासेनापि न दृग्गोचरीभवन्ति।

स्थानाभावात् स्थालीपुलाकन्यायेन उदाहरणद्वयं प्रस्तूयते सुज्ञपाठक-विनोदार्थम्—

पत्युरनुवर्तनं खलु विवाहितायाः श्रुतः परो धर्मः।
मनसो यत्र न वर्तनमम्ब विवाहः कथं स धर्माय॥

(संयोगितास्वयंवरम् पृ०

भक्ताः परेशं वनिता पुमांसं लतास्तरुं धूर्तजनास्तु लुब्धम्।
खगाश्च नीडं सरितः समुद्रं व्रजन्ति तद्वत् कवयो नरेन्द्रम्॥

(संयोगितास्वयंवरम् पृ० ५३)

आच्छादितो जलधरैरपि किं विवस्वान्।
नाविष्करोति निजमप्रतिमं प्रकाशम्॥

(संयोगितास्वयंवरम् पृ० ५५)

(वसन्तराग, त्रिताल)

वितरति नतिमयि रतिरमण
युवतिजनस्ते रतिरमण
नवसुमसायक वसन्तनायक
अलिकुलगायक रतिरमण॥ वितरति॥ १॥
वनिताशरण रसिकविधरण
भवसन्तरण। रतिरमण॥ वितरति॥ २॥
सुरगणवन्दित। निजरतिनन्दित।
स्तवनावन्दित रतिरमण॥ ३॥
वाञ्छितमर्पय मनांसि तर्पय
स्वजनं दर्पय रतिरमण॥ वितरति॥ ४॥

(केदारराग त्रिताल)

माधव यमुनानीरविहारी, मृदुराधाऽधरमधु-मधु-मधुकर ।

नटवर गिरिवरधारी ।। माधव ।। १ ।।

राधायौवनवरवनमाली । गोपीजनसुखकारी ।। माधव ।। २ ।।

सुमतिमतिजनय नय जयशाली । त्वमु जयपथमविकारी ।। माधव ।। ३ ।।

(सं० स्वयंवरम् पृष्ठ ५१)

—इदमपि निवेदयितुं कामये यद् यदि कविनैव प्रत्येकनाटकस्य नाम्नः अग्रे 'सङ्गीत' शब्दस्य योजना कृता स्यात् (यथा संगीतसंयोगितास्वयंवरमित्यादि) तदा न किञ्चिदप्ययुक्तमभवत् ? अत्रेदमप्यनिवार्यतया उल्लेखनीयं यत् त्रीण्यपि नाटकानि तत्समय एव तस्मिन्नेव महाविद्यालये व्याकरणशास्त्राध्यापकरूपेणाध्यापनं कुर्वता विद्वत्तल्लजेन श्रीधरशास्त्रिमहोदयेन शास्त्रसंवलितमनोज्ञटीकाभिरलङ्कृतानि पुनश्च बदरीनाथशास्त्रिमहोदयेन एकस्या रचनायाः आङ्ग्लानुवादोऽपि कृतः सोऽपि मुद्रितः ।

*

## सुकविं नमामः

यस्य स्रवन्त्यमृतमेव मुखे तुषार—
हाराभिरामरुचिरञ्चितवक्रभङ्गिः
सुक्तिर्युसिन्धुरिव मुर्ध्नि हरस्य चन्द्र—
लेखेव वा वसति तं सुकविं नमामः

"महाकविजगद्धरभट्टस्य"

●

श्री गणेशराम शर्मा

*

# मृतभाषायाः श्राद्धतर्पणम्

'अपि संस्कृतभाषा मृता? उताहो स्विज्जीवति? कदाचित् सा मृतेवाभाति नः! यदि च जीवति चेत्, तदाद्यत्वे तस्या जीवने किं प्रमाणम्? किं तस्याः स्वरूपम्? किं वा तस्या वर्तमानं भौतिकमक्षरकलेवरम्? किं तत्तेजः? कस्तस्या उपयोगः? क्व च सा साक्षाद्द्रष्टुं शक्यते? तद्दर्शनमपि यदि भवेत्तदा किं तत्फलम्? का सिद्धिः? किं कृतकृत्यत्वम्? को लाभः? कश्च चमत्कारविशेषः?? इत्येवं विधानां प्रश्नानां समाधानमिदानीमक्षुण्णं भवितुमर्हति निर्भ्रान्तं निष्प्रपञ्चं च!'

'मन्ये, विश्ववाङ्मयस्य नानामृतभाषा इव संस्कृतभाषापि स्वास्तित्वं प्रत्यक्षं न प्रमाणयति, अद्यत्वे क्वास्ते सा संस्कृतभाषा, यस्यां किल मन्त्रद्रष्टारो महर्षयः स्वकीयमाध्यात्मिकम्, आधिदैविकम्, आधिभौतिकं च दिव्यं तत्त्वज्ञानं सविज्ञानं शिक्षादीक्षासदाचारचारित्र्यभास्वरमक्षरसंस्थाननिबद्धाकारप्रकारं निबबन्धुश्छन्दोमय्या त्रय्या शैल्या श्रुतिपरम्परया स्मृतिपद्धत्या च, तथा तामेतां देववाणीं समस्तविश्वचेतनामिव सप्राणां, स्वस्थं जीवन्तीं प्रमाणयामासुः!

'तदा जोघुष्यताम्, सा तु संस्कृतभाषा ममारेति, कालव्यालेन कवलीकृतेति, चिरायात्र जीवित्वा स्वजीवनं पुनर्मृतेति! यदि च सा न मृता, प्राणिति चेदिदानीमपि सा सर्वजनदर्शनसुलभा, सर्वभाषापरिवारमन्दिरे तेजोमयज्योतिर्दैदीप्यमानस्वरूपा तदा साक्षादाविर्भवितुमर्हति। जाते हि तस्याः साक्षात्कारे, तस्या मृतभाषात्वकलङ्को वापवादो वा वाङ्मयजगति जनरवविषयतां गतोऽतिशीघ्रमेव परिमार्जितो भवेन्नाम! यदि सुरभारतीयं

संस्कृता वाक् साम्प्रतं नेत्थं जीवन्ती प्रमाणिता भवति, तदा तदस्तित्वविषये भाषावैज्ञानिका दार्शनिकाः साहित्यकाराः सार्वदेशीया विद्वांसश्च जनसाधारणाश्चापि विप्रतिपद्येरन्। विप्रतिपन्नाश्च ते नन्वेवं किमपि तद्विषयकमन्यथाबोधमाश्रित्य विब्रूयुः—

'आसीत् पुरा प्रागैतिहासिके काले, इतिहासान्तर्भुक्ते समये च कापि संस्कृतभाषा, यां केचनार्या महर्षयो मुनयः सिद्धाः प्रसिद्धा भावुका भद्रजना भारतीया देववाणीं, सुरसरस्वतीं वोचुः। ग्रीक-लातिन-आख्यादिभाषाणां जीर्णानामिव जीवनं तस्या अभूत्। परमद्यत्वे सा न जीवति। यदि च केचित् कदाचित् पूर्वाग्रहग्रहिलाः पुराणमित्येव सर्वं साधु मन्वानास्तां जीवन्तीं संसाधयितुं चेष्टन्ते तदा प्रत्यक्षवादिनि युगेऽस्मिन् भौतिकपदार्थविज्ञानघने तदस्तित्वं करतलामलकवत् न संसिध्यति, विद्युद्यन्त्रान्तः प्रवहन्ती तेजोधारेव चमत्कारं न जनयति। सत्यप्येवं कश्चन तामेतां जीवन्तीं प्रमाणयितुं संचेष्टते चेत्तदेत्थं वक्तव्यं स्यात्—'सा जीवति संस्कृतभाषाद्यापि चेत्यस्माकमास्था। आम्, सान्तर्गुप्ता त्रिवेणीसंगमतीर्थे सरस्वतीवास्माकं भारतीयानां जीवनान्तःस्रोतोवाहिनी, तत एव हि ज्ञान-कर्मोपासनाधारारूपा धत्ते स्वजीवनम्!' एवं स्थितावेतत् स्वीकर्तव्यं भवेत्—'यद्यपि सास्मद्धारणानुसारं कथमपि जीवति, प्राणिति, श्वासोच्छ्वासांश्च गृह्णाना पुण्यकर्मणां हृदि प्रत्यक्षं जायते परं तु सा मनागस्वस्थेव कथमपि प्रश्वसिति साम्प्रतम्। सा सप्राणा सर्वावयवसम्पन्नापि च चिराज्जीवनसङ्घर्षे प्रायस्यमानौजोबलस्फूर्तितेजोवीर्यक्षीणा जीर्णा शीर्णाघातशतैर्विदीर्णा दीना हीना विद्रूपा मुमूर्षुरिव महता कष्टेन दुःखदग्धा स्वायुषः कालक्षपणपरा कृपणेव जीवति। नेदमित्थं ज्ञायते, यत्सा संस्कृतभाषा क्व नु कुतो वा कथमिव वर्तमानास्त इति तत्त्वतो न वयं विद्मः न वयं विषयेऽत्र निश्चयेन किमपि वक्तुमुत्सहामहे, न च तज्जीवनचेष्टा याथार्थ्येन वर्णयितुं पारयामहे!!'

'यदि च सेयं संस्कृतभाषा न ममार, तदा साऽस्वस्था शय्याशरणा मृतप्राया कष्टमुच्छ्वसन्ती केवलं केषांचिच्छ्रद्धाजडानामन्तिमा प्राणशक्ति-

रित्याघोषयन्तु तत्पारिवारिका जनास्तदस्तित्वं परिचिन्वाना: संस्कृतजनन्याः कुलतन्तवोऽत्रऽभवन्तो भारतीया भद्रजनाः सुरसरस्वतीपुत्राः ।'

'अये ! साद्यापि च जीवति भारतभूभागे, सत्यमेव हि जीवति सेति वयं प्रसभं ब्रूमः । यदा कदा भाषावादप्रसङ्गेषु तस्या भाषासञ्ज्ञासु ननु नामोच्चाराः श्रूयन्ते ! केचन बुधाः सहृदयाः प्राहुस्तस्या जीवनास्तित्वसिद्धिविषये यत् सा पण्डितकुलेषु वैदिकेषु, शास्त्रार्थविद्याप्रवीणेषु दार्शनिकेषु, तपःसघनाराधना-तत्परेषु तान्त्रिकसम्प्रदायेषु, काशीकाश्मीरोत्तरदक्षिणप्रदेशानामाचार्यसमाजेषु च स्वात्मनो महतीं जीवनसम्पदं रक्षन्ती जीवति । नियतिनिष्पीडितापि स्व-स्वान्तः सारतत्त्वानि कथं कथमपि परिपालयन्ती मठाधीशानां मोहान्तानां सिद्धपीठाश्रमेषु जीवति । सनातनवर्णाश्रमधर्ममनुवर्तमानानां सदाशयानां सद्गृहस्थानां सज्जनानामन्तःकरणे जीवति, जीवत्यवश्यम् ! परन्तु सा दिव्योपचारसंजीवनीचिकित्सौषधिरसैः पर्याप्तां सेवां शुश्रूषां च विना केवलमन्तःसारमात्रावशेषा भग्नाशा नष्टविश्वासा कथङ्कारमात्मानमस्तित्वसिद्धं प्रमाणयतु धारेऽस्मिन् कलिकालहतके ?'

'ततः सा जीवन्ती चापि मृतोपमा ! नहि, नहि, सा मृतैवेति स्वीकरण-मुचितम् ! मृताचेत्तदाऽस्मत्तः श्राद्धतर्पणमपेक्षेत तदा·······?'

'नाहमेतच्छ्रद्दधे ! मयि जीवति तदात्मजे प्रिये पुत्रे कथं नाम सैषाऽमरभारती सत्यमेव हि मृतेति तत्त्वतः सप्रमाणं केनापि वक्तुं शक्येत ? अहं तु चिरात् सकलमपि स्वजीवनं यावत्तामेतां संस्कृतां गीर्वीं जीवन्तीमेव प्रमाणयितुं सयत्नं चेष्टमानोऽस्मि भोः ! कथं न भवन्तोऽत्र भवन्तो बुधा विदितवेदितव्याः पश्यन्तोऽपि न पश्यन्ति सच्चेतसो महापण्डिता यत्सेयं संस्कृतभाषा वर्तमानविश्वस्य सर्वेष्वपि च विश्वविद्यालयेषु, महाविद्यालयेषु, पाठशालासु, शोधान्वेषणगवेषणासंस्थानेषु, पुस्तकालयेषु, पाठ्यपुस्तकेषु, साहित्यसेवाहैताकिषु लेखकतल्लजेषु, ग्रन्थप्रणयनपरेषु विद्वत्सु, कविषु, समसामयिकपत्रपत्रिकाणामन्तःपृष्ठेषु च स्वजीवनं जीवतीति ?'

'भगवन् ! क्षम्यतामयं मम स्पष्टोक्तिकृतोऽपराधः, परन्तु विवक्षासौ भवति यत् संस्कृतभाषा तु मृतैवेति । कामं तद्भग्नावशेषाश्चिह्नविशेषा

जगति जीव्यासु: परं सा स्वयं मृतापि, लोकान्तरितापि स्वात्मशुद्धयेऽग्निस्नानं स्नातापि च स्वात्मजैः सगोत्रीयैः सम्बन्धिभिश्च स्नेहात् प्रदत्तं श्राद्धतर्पणनीवापाञ्जलिजलं विना प्रेतयोनिं प्राप्ता सन्तुत्तृङ्मूर्च्छिता वेदनामसह्यां सहमानापि तितिक्षां परां द्रढयन्ती चापि वराकी बत शोच्यां दुर्गतिं भजत इति परिमार्जनीयोऽयं तस्या लोकापवादकलङ्कः !'

कश्चन नास्तिको निराशावादी वदति—'अरे, ननु मूर्खाः ! सा संस्कृतभाषा त्वधुना परिपन्थिभिः कैश्चिद् गलहस्तिता, भर्त्सिता, तिरस्कृता स्वाभिमानभङ्गभीरुः पराभवदुःखविषमविषवेदनां भुञ्जाना कण्ठावरोधमनुभवन्ती कथमिव स्वात्मानं सचेतनम्, सशक्तं, बलौजस्तपस्तेजोमयं स्वव्यक्तित्वं सजीवं प्रमाणयितुं प्रभवेन्नाम ? तत एव हि साक्षराणां समाजे सेयं जागतिकेषु वाग्व्यवहारेषु संस्कृतभाषा न कुत्रापि किमपि वक्तुं प्रभवति। संस्कृताध्यायिनां वाचो भाषाया अस्या माध्यमेन स्वभावाभिव्यक्तिं सुस्पष्टां कर्तुं न पारयन्ते। न लेखने, पठने शिक्षायज्ञस्य कर्मकाण्डेषु सर्वेषु तस्याः कोऽपि तात्त्विको व्यवहारः शुभारम्भप्रेरको ह्युपयोगो वा दृक्पथमवतरति ! ततः संस्कृतभाषा नामैका मृतभाषा कीर्तिशेषेति मन्तव्यं स्यात्।'

'न खलु न खल्वेवम् ! प्राचीने वाङ्मये, नव्ये साहित्ये चास्याः सुरभाषाया जीवनमन्तः स्फुरद्रूपं विद्यत' इति किं न पश्यन्ति भवन्तः ? संसारस्यास्य समस्तासु भाषासु संस्कृतभाषायास्तेजोमयास्तत्त्वांशा एव तत्तद्रूपाः संस्फुरन्ति। यदि चैवम्, तदा विश्वभाषाकुटुम्बिनीयं संस्कृतावाक् प्राणार्पणं स्वात्मबलिदानरूपं निवेद्योदारहृदया कीर्तिशेषाप्यसावजरामरं जीवत्येव ! एवं सति वास्तविकं मरणं विना तस्यै श्राद्धतर्पणं कथं नु बत सम्पद्येतेत्यपरोऽसौ विकल्पस्तद्दर्शयतां पुरतोऽस्माकम् !'

अतः सर्वैः सद्भिरेकमतैः संस्कृतभाषा मृतभाषेति जोघुष्यतामथवा तच्छ्राद्धतर्पणमायोज्यतां सपदि येन सा सद्गतिं भजेत् ! स्वसिद्धान्तोद्गारेषुस्पष्टवादिभिः सुस्फीतदृष्टिभिर्भाव्यमस्माभिरिति किं बहुना !

*

आचार्य पण्डितसरस्वतीप्रसाद चतुर्वेदी

*

# रामप्रसादकृत–अव्ययार्थकारिका

अमुद्रितानामनुपलब्धानां वा ग्रन्थानां 'संगमनी' द्वारेण प्रकाशनकार्यं शोभनं स्तुत्यं च। अद्यत्वे कार्यमिदं नितान्तमावश्यकम्। भारतीयपरम्परायां नवनिर्माणापेक्षया जीर्णोद्धारस्य महत्त्वं ज्यायः।

अनेनैवोद्देश्येन प्रकृतग्रन्थः प्रकाश्यते। अस्य रचयितुः पण्डित रामप्रसाद-महोदयस्य अविस्पष्टा स्मृतिरद्यापि मन्मानसपटलमवतरति। उक्तपण्डित-महाभागो मत्पूज्यपितुः पण्डित लक्ष्मीनारायणचतुर्वेदिनो ज्येष्ठमित्रमासीत्। वर्षे द्वित्रिवारं स स्वग्रामात् (अन्तर्वेदे 'बुद्धिपुरी' समीपवर्ति 'चरवा' नाम्नो ग्रामात्) वाराणसीं गच्छन्नागच्छंश्च मद्गृहे सप्ताहानि यावत् अवतिष्ठते स्म। अहं तदानीं बालत्वात्तद्वैदुष्यगाम्भीर्यं नाजानाम्। किन्तु तातपादेन सह तस्य वार्तालापेन तमहं श्रद्धाभाजनं महापण्डितं च अमन्ये। वाराणस्यां दुर्गाकुण्डस्य समीपे भगनीरामस्य पाठशालायां स अवस्थानमकरोत्। तत्रैवा-वस्थाय व्याकरणग्रन्थानां प्रणयनं प्रकाशनं च कुर्वन्नासीत्। तस्य कृष्णवर्णं कृशकायं दन्तुरमुखं तेजस्विनेत्रं च अद्याप्यहं स्मरामि। स सर्वदा पुस्तकावृतः पुस्तकभाराक्रान्तो वा दृश्यते स्म। स बालब्रह्मचारी आसीत्। यदा-कदा तस्य पूज्या मातापि साकं तिष्ठति स्म। तेन व्याकरणशास्त्रविषयकः 'पाणिनीय-सोपान' नामा महाग्रन्थो व्यरचि। तस्य कतिपयेंऽशास्तेन काले-काले पृथक्पृथग्रूपेण प्रकाशिताः। मत्पार्श्वेऽद्यापि तस्य निम्नलिखिताः प्रकाशितांशाः सुरक्षिताः सन्ति। यथा—अव्ययकारिका, उपसर्गार्थकारिका, सोपसर्गधा-त्वर्थकारिका, परिभाषावृत्तिः' इत्यादि। न जानेऽहं यदन्येंऽशाः अथवा मूल-ग्रन्थः—पाणिनीयसोपानाख्यरुपलभ्यते न वा।

कालक्रमेण प्रकाशिता इमे ग्रन्था लुप्तप्राया दुर्लभाश्च। अत एषां पुनर्मुद्रणस्य महती आवश्यकता वर्तते।

परिभाषावृत्तिं विहाय अन्ये सर्वे पूर्वनिर्दिष्टांशाः श्लोककारिकारूपेण लिखिताः सन्ति।

विद्वज्जनान्प्रति निवेदनं यत्ते प्रयागमण्डलभूषणानां वैयाकरणशिरोमणीनां पण्डितरामप्रसादमहाभागानां तेषां ग्रन्थानां च विषयेऽधिकामभिज्ञतां संगमनी-सम्पादकस्य सविधेऽवश्यं प्रेषयेयुः।

उपलब्धपुस्तिकाऽत्राविकलरूपेण पुनः प्रकाश्यते। केवलं सन्दिग्धपाठाः पादटिप्पण्यां दर्शिता विद्यन्ते। मूलपुस्तिकायाम् ८'×५' के ८ अष्टौ पृष्ठानि सन्ति। प्रथमे पृष्ठद्वये मुखपृष्ठं लघुभूमिका च विद्यते। अन्तिमाष्टम-पृष्ठस्य पूर्वार्धे ग्रन्थसमाप्तिः, उत्तरार्धे च पुष्पवृक्षस्याधारपात्रं चित्रितं दृश्यते।

*

# श्रीः

# अव्ययार्थकारिका।

रामप्रसादकृतA—पाणिनीयसोपानोक्ता तेनैव शोधिता प्रकाशिता च।

---

श्रीकाश्यां

महामण्डलयन्त्रालये श्रीअम्बिकाचरणचक्रवर्तिद्वारेण मुद्रिता

---

संवत् १९७१

मूल्यम्

---

A—चिह्नेन समासो ज्ञेयः।

# अव्ययार्थकारिका

अव्ययादाप्सुपः । २ । ४ । ८२ ॥
अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् ।

श्लोके यस्याव्ययस्यार्थः तस्यादौ लेखनक्रमः ।
पादान्ते पादमध्ये यत् तत् पादस्यास्ति पूरकम् ॥१॥

स्वः स्वर्गे परलोकार्थेऽन्तर्मध्ये तु प्रकीर्तितम् ।
प्रातः प्रभातकाले स्यात् पुनरप्रथमे मतम् ॥

भेदे पक्षान्तरे चैवाऽधिकारेऽप्यभिधीयते ।
उच्चैर्नीचैर्महत्यल्पे शनैर्मन्दगतौ मतम् ॥२॥

ऋते तु वर्जनार्थे स्यादाराद्दूरान्तिकार्थयोः ।
ह्यो भूतेह्निA पृथग्भिन्ने श्वो भविष्यद्दिने स्मृतम् ।

दिवा स्याद्दिवसे सायं सायंकाले प्रकीर्तितम् ।
चिराय चिररात्राय चिरस्य हि चिरं चिरात् ॥४॥

बहुकालार्थकाश्चैते विद्वद्भिः समुदीरिताः ।
ईषत् किञ्चिन् मनाक् स्तोकेऽमुत्र प्रेत्योद्भवान्तरे ॥५॥

दिष्टया जोषं सुखार्थे स्यात् तूष्णीं मौनेऽभिधीयते ।
बहिर्बाह्ये तु विज्ञेयंB स्वयमात्मनि कीर्तितम् ॥६॥

नक्तं रात्राववस् बाह्ये वृथा व्यर्थे प्रकीर्तिम् ।
नञ् विर'धाल्पसादृश्याऽभावान्यनिन्दितार्थकम् ॥७॥

---

Aमूले 'न्हि' इति पाठः । Bमूले 'वहिर्वाह्ये' पाठः । C 'व' मूले ।
Dइयं पंक्तिः पूर्वोक्तनञर्थोदाहरणप्रकाशिका ।

Dअसुरोऽनुदरानश्वोऽपापोऽमानुष एव च ।
अब्राह्मण इति ज्ञेयं यथाक्रममुदाहृतम् ।।८।।

समस्तश्चाऽसमस्तश्च नञ् विशेषो द्विधा पुनः ।
पर्युदासः समस्तः स्यात् प्रसज्यस्तूभयोर्मतः ।।९।।

अत्यन्ताभावभेदौ चाऽसमस्तस्य प्रकीर्तितौ ।
अत्यन्ताऽभाव एवार्थः समस्तस्य निरूपितः ।।१०।।

घटो नास्तीति विज्ञेयं घटो न पट इत्यपि ।
असूर्यंपश्य इत्यादि तदुदाहरणं क्रमात् ।।११।।

विधौ नञः प्रधानत्वं निषेधे त्वप्रधानता ।
समासे पर्युदासः स्यादिति सूरिसुनिश्चयः ।।१२।।

प्रधानत्वं विधौ न स्यान्निषेधेऽस्ति प्रधानता ।
प्रसज्यप्रतिषेधस्य क्रियायामन्वयः सदा ।।१३।।

वत् तुल्यार्थे तिरोऽन्तर्धौA तिर्यगर्थेऽवहेलने ।
अन्तरा वर्जनार्थे स्यान् मध्यार्थेऽपि समीरितम् ।।१४।।

अन्तरेण विनार्थे स्यात् शं सुखार्थे च कीर्तितम् ।
विना निषेधनेऽर्थे स्यान् नानाऽनेकविनार्थयोः ।।१५।।

सहसाऽतर्किते प्रोक्तमुपधा भेदबोधने ।
सना सनत् सनान् नित्ये प्रायो बाहुल्यबोधने ।।१६।।

स्वस्ति स्यान्मंगले पुण्येऽप्याशीर्वादे च कथ्यते ।
स्वधा पिण्डप्रदाने स्यात् स्वाहा हव्यविसर्जने ।।१७।

अन्यदन्यार्थके च स्यान् मृषा मिथ्याऽनृते मतम् ।
मिथो मिथः सहार्थे स्याद्रहस्यर्थेऽभिधीयते ।।१८।।

---

A 'द्वौ' इति मूले ।

अस्ति सत्त्वे मुधा व्यर्थे क्षमा क्षान्तौ निगद्यते ।
मुहुः स्यात् पुनरित्यर्थे साकं सार्धं सहार्थकम् ॥१९॥

नमो नमस्कृतौ धिक् स्यान्निन्दने भर्त्सनेऽपि च ।
अमा सह समीपेऽद्धा प्रत्यक्षे निश्चये स्मृतम् ॥२०॥

आमङ्गीकरणे स्यान् मा माङ् शङ्कानिषेधयोः ।
भूयस् तु पुनरर्थे स्यात् साम्प्रतं न्याय्यवाचकम् ॥२१ ॥

साक्षादैन्द्रियके तुल्ये परं किन्त्वर्थके स्मृतम् ।
सत्यमर्धप्रतिज्ञानेA संवद् वर्षे च कथ्यते ॥२२॥

प्रादुसाऽऽविस् प्रकाशे स्यादवश्यं निश्चयार्थकम् ।
अजस्रमनिशं नित्यं सन्ततं सततार्थकम् ॥२३॥

झटिति त्वरितार्थे स्यात् सु पूजायां प्रकीर्तितम् ।
अस्तं स्याद्दर्शनाऽभावे हुं स्यात् प्रश्नवितर्कयोः ॥२४॥

स्थाने युक्तं वरं त्वीषदुत्कृष्टे चाप्युदीरितम् ।
चान्वाचये समाहारेतरेतरसमुच्चये ॥२५॥

वोपमायां विकल्पे स्यादिवार्थे च समुच्चये ।
ह प्रसिद्धार्थके प्रोक्तमह स्यात् पूजनार्थकम् ॥२६॥

आहोस्वित् स्याद्विकल्पार्थे आह स्यात् कथनार्थके ।
एवाऽवधारणाऽप्यर्थाऽसम्भवप्रचुरार्थकम् ॥२७॥

विशेषणेन संयुक्तोऽयोगच्छेदकरो मतः ।
विशेष्यसङ्गतस्त्वेवकारोऽन्ययोगहारकः ॥२८॥

क्रियासंगगतोऽत्यन्ताऽयोगहृच्च यथाक्रमम् ।
शंखः पाण्डुर एव स्यात् पार्थ एव धनुर्धरः ॥२९॥

नीलं कमलमस्त्येवेत्यादौ लक्षणसङ्गतिः ।
एव प्रकारे सादृश्येऽङ्गीकारे चाऽवधारणे ॥३०॥

अपि सम्भावनाप्रश्नशङ्कासु विनिगद्यते ।
गर्हा समुच्चयाऽर्थे चाऽन्ववसर्गे समीरितः ॥३१॥
कच्चिदिष्टाऽनुयोगे स्यान् नूनं तर्के च निश्चये ।
युगपदेककालार्थे शश्वत् पुनः सहार्थयोः ॥३२॥
कामं स्वच्छन्द इत्यर्थे प्रकामं स्याद् भृशार्थकम् ।
भूयः पुनरित्यर्थे स्यात् साचिA स्यात्तिर्यगर्थकम् ॥३३॥
हन्त हर्षे विषादे च वाक्यारम्भानुकम्पयोः ।
यावत् तावच्च सर्वार्थेऽवधौ मानेऽवधारणे ॥३४॥
खलु निषेधनेB वाक्यालङ्कारेऽनुनये मतम् ।
जिज्ञासा निश्चयार्थे च तथाहि स्यान्निदर्शने ॥३५॥
किलाऽलीके च वार्तायां सम्भाव्येऽनुनयेऽपि च ।
अथोऽथाऽनन्तराऽऽरम्भप्रश्नकार्त्स्न्ये च मंगले ॥३६॥
अधिकारे प्रतिज्ञायां क्वचिदस्ति समुच्चये ।
अस्मि स्यादहमित्यर्थेऽहो ही विस्मयवाचकम् ॥३७॥
अ स्यात् सम्बोधने तद्वधिक्षेपनिषेधयोः ।
आङ् ल्यार्थेC च सीमार्थेऽभिव्याप्त्यर्थक्रियार्थयोः ॥३८॥
आ स्मृतावनुकम्पायां तथा वाक्ये समुच्चये ।
आः स्यात् कोपे व्यथायां च नु प्रश्नेऽर्थे विकल्पने ॥३९॥
बतामन्त्रणसन्तोषाऽनुकम्पाखेदविस्मये ।
तु हि ह स्म च वै पद्यपादपूरणकारकम् ॥४०॥

---

**A** मूले 'स्पात्' । 'स्यात्' इत्युचितम् ।
**B** अस्मिन् स्थले अवग्रहः विपरीतार्थकः मूलपाठात् पृथक्कृतः ।
**C** अस्मात् 'ङ' अक्षरादनन्तरं कः शब्दो योज्यः ? अस्य निश्चयं कर्तुं न शक्नोमि ।

सद्यः सपदि तत्काले प्रसह्य स्याद्धठार्थकम् ।
अये हे अङ्ग भो एते सम्बोधनप्रकाशकाः ॥४१॥
यत् तत् यतः ततो हेतौ युन्कुत्साग्निरयार्थयोः ।
चट्ठ चाट्ठ प्रिये वाक्ये इवोत्प्रेक्षोपमार्थयोः ॥४२॥
विष्वनेकार्थके प्रोक्तं व सादृश्येऽभिधीयते ।
ननु प्रश्ने त्वनुज्ञायां निश्चयेऽनुनये तथा ॥४३॥
आमन्त्रणे च विख्यातं किं स्यात् प्रश्ने च निन्दने ।
नाम प्रसिद्धौ सम्भाव्ये क्रोधे स्वीकरणेऽपि च ॥४४॥
अलं पर्याप्तिशक्त्यर्थे भूषणे च निषेधने ।
इति हेतौ च प्रस्तावे स्पष्टोत्कर्षसमाप्तिषु ॥४५॥
निर् निश्चये निषेधे स्यादत्युत्कर्षे च लङ्घने ।
अनु पश्चाच्च सादृश्ये विद्धाद्भिः समुदाहृतम् ॥४६॥
प्रति प्रतिनिधौ वीप्सालक्षणादौ समीरितम् ।
तु भेदे निश्चयार्थे च हाऽर्तौ शोकविषादयोः ॥४७॥
अहहा चिप्रखेदार्थे Aपरिक्लेशप्रकर्षणे ।
हहहाऽद्भुतखेदार्थे हि हेतौ निश्चये स्मृतम् ॥४८॥
चिच्चन स्यादसम्पूर्णे न ह्य नो ना निषेधने ।
चेद् यदि स्याच्च पक्षेऽन्ये माऽलं मास्म निवारणे ॥४९॥
समन्ततः समन्तात् तु परितः सर्वतस्तथा ।
चतुर्दिक्षु मता एते कं जले मूर्ध्नि च स्मृतम् ॥५०॥
अस्त्वसूयाऽभ्यनुज्ञानस्वीकारेषु प्रकीर्तितम् ।
ननु स्याच्च विरुद्धोक्तावपि त्वनुनये मतम् ॥५१॥

---

A मूले 'परिक्लेशः' पाठः ।

यथायथं यथास्वंAच यथायोग्यार्थ Bवाचकम् ।
यथातथं यथार्थं च सदर्थे समुदाहृतम् ॥५२॥
इदानीमधुनैतर्हि तथा सम्प्रति साम्प्रतम् ।
तत्कालार्थभिधाने स्युरेवं ज्ञेयं प्रयोगतः ॥५३॥
अद्याऽस्मिन्नहनि प्रोक्तं पूर्वेद्युः पूर्ववासरे ।
उभयेद्युर्द्वयोरह्नोश्चोभयद्युस्तथैव च ॥५४॥
Cपरेद्युर्विपरेह्नि स्यात् परश्वस्तत्परे दिने ।
सकृत् सहैकवारे स्यादुताप्यर्थविकल्पने ॥५५॥
श्रौषट् वौषट् वषट् चैतद्धविर्दाने प्रकीर्तितम् ।
वदि स्यादसिते पक्षे सुदि शुक्ले समीरितम् ॥५६॥
इ विस्मये जुगुप्सायां तथा सम्बोधने मतम् ।
उ ए संबोधने प्रोक्तमोस्यात्सम्बोधनार्थकम् ॥५७॥
ओमङ्गीकरणेऽर्थे स्याच्च तन्येऽपि समीरितम् ।
सुष्ठु प्रशंसने प्रोक्तमञ्जसा सत्वरशीघ्रयोः ॥५८॥
उपांश्वविदितोच्चारे रहस्ये समुदीरितम् ।
विहायसोक्तमाकाशे दोषा रात्रौ प्रकीर्तितम् ॥५९॥
Dआभीक्ष्णं भूय इत्यर्थे ऊँ प्रश्ने स्यादु कोपने ।
पुरास्याE भूतकालार्थे मङ्क्ष्वाशु सत्वरार्थकम् ॥६०॥

इति पाणिनीयसोपानोक्ताऽव्ययार्थकारिका
समाप्ता ।

---

A तथा B अनयोः पङ्क्त्योः 'यथास्वां' तथा 'यथाग्यार्थ' इति मूलपाठौसंशोधितौ ।

C 'परेद्यर्विपरे' इति सदोषः मूलपाठः परिमार्जितः ।

D तथा E आभीक्ष्णे तथा पुरास्या इत्यत्र च मूलोक्तरेखाङ्कितांशौ नावबुध्येते ।

श्री प्रभातमिश्रः, साहित्याचार्यः



# कविवर गुरुभक्तसिंह भक्तस्य नूरजहां-काव्यम

नूरजहाँ-काव्यविषये किमपि कथनात् पूर्वं समासतः कविजीवनविषये किमिपि कथनं साम्प्रतमसाम्प्रतञ्च ।

प्रकृतिकविपुङ्गवानां श्री गुरुभक्तसिंह 'भक्त' महाभाजां जन्म उत्तर-प्रदेशस्थगाजीपुरजनपदस्य सर्वसधारण सम्पन्ने जमानियाँ ग्रामे संवत् १९५० वैक्रमीये हायने भाद्रपदमास-कृष्णपक्षे-द्वितीयायां तिथौ क्षत्रियकुले बभूव ।

अस्य पिता श्रीकालिकाप्रसाद सिंहस्सेनातः अवकाशमवाप्य तत्रैव नागरिकः चिकित्सकः आसीत् । चरितनाय कस्य मातुर्नाम सरस्वतीबाई । तस्या एव संरक्षणे लालनपालनसुखमनुभवतः बाल्यकालो व्यतीतः ।

अस्य प्रारम्भिकी शिक्षा बलियायां गोरखपुरनगरेच सञ्जाता । तदनतन्रं भक्तमहोदयानां सकलापि शिक्षा आवुत्त श्रीभगवान् सिंहस्य गृहे संस्थितिं कुर्वतां प्रयागनगरे ऽभवत् । भक्तमहोदयः बी० ए०, एल्० एल्० बी० इत्युपाधिधारी प्रयागविश्वविद्यालयस्य योग्यतमः स्नातकः ।

शिक्षां समाप्य कविवरः १९१९ ईस्वीयेवर्षे बलियायाम् अधिवक्तुः कार्यं प्रारेभे । किन्तु छलप्रपञ्चनामयं तत्कार्यं स्वभावसरलस्य कविवरस्य प्रकृत्यनुकूलन्नाऽसीत् । अतः तत्परित्यज्य जीविकायै अनेन विभिन्नविभागेष्वाजीविका विहिता । पुनरयं आजमगढ़नगरस्य नगरपालिकायां एकजीक्यूटिव इति

संज्ञकाधिकारिपदमलङ्कृतवान् । ततः अवकाशमवाप्य साम्प्रतं तत्रैव नगरे भवनं निर्माय कविवरः सपरिवारो निवसति ।

कविवराणामद्यावधि प्रकाशिताः सरससुमन, कुसुमकुञ्ज, वंशीध्वनि, नूरजहाँ, वनश्री, विक्रमादित्य, दो फूल, आधुनिक कवि इत्यभिधानाः अष्टसंख्याकाः काव्यग्रन्थाः सन्ति । एषुल्लेखो मया प्रकाशनकालक्रमाऽनुसारेण कृतः । एषु 'आधुनिक कविः इति कविना विहिता सर्वोत्कृष्टस्वकवितानां संग्रहात्मिका कृतिः वर्तते । नूरजहाँ विक्रमादित्यश्च महाकाव्यकोटिमाटीकेते । शेषरचना मुक्तककाव्यभेद पोषिका । प्रकृतमनुसरामः ।

नूरजहाँया: प्रकाशनं १६३५ ईस्वीये वत्सरे सञ्जातम् । तस्मिन् काले हिन्दी भाषायामासीद प्रबन्धकाव्यस्य नितरामभावः । प्रकाशनाऽनन्तरं स्वल्पेनैव कालेन अस्य काव्यस्य हिन्दी जगति महती चर्चा सञ्जाता । सत्वरमेव ग्रन्थोऽयं पठनपाठनयोः स्वस्थानमधिजगाम ।

काव्यमिदंअष्टादशसर्गात्मकम् । अस्य काव्यस्य प्रधान नायकः मुगल सम्राट् जहाँगीरः नायिका चसौन्दर्यसम्राज्ञी सम्राज्ञी, ईरानदेशोद्भवा नूरजहाँ । तामधिकृत्य कविना अस्य प्रबन्धकाव्यस्य नाम नूरजहाँ इति संविहितम् । संस्कृतमहाकाव्यानामिवाऽस्य काव्यस्य अवतारणा विघ्नहरणेन मङ्गलाचरणेन न कृता कविना, किन्तु फ़ारसदेशे प्रचलितस्य भारतीय वसन्तोत्सवसमान नौरोज़ोत्सवस्य सुन्दर वर्णनेन विहिताः । तत्प्रसङ्गे कविना सर्वथा संस्कृतकाव्येष्वचर्चितानां भारतीयकाव्यरसिकैः नितान्तमपरिचितानां फारसदेशोद्भवानां 'शाहवलूत' 'आजाद' 'शमशाद' 'सरो' प्रभृति तरुणां तत्रत्यैः कविवरैः नयनोपमायै प्रयुक्त 'नरगिस' पुष्पाणां 'कब्कदरी' 'दुरेज' 'तीहू' 'हुवारे' नामक पक्षिणां मनोहारि वर्णनं विहितम् । यथा—

मंजुल मंजरियों से मंडित लतिकाओं से मिल मिल कर,
नवदल से शोभित शाखाएँ झूम रही हैं हिल हिलकर ।

करते हैं विहार पर्वत पर 'शाह-वलूत' और 'आजाद'
सुन्दरता के पुतले बनकर शोभा सरसाते 'शमसाद'।
लचका देता बड़े लोच से 'सरो' सुडौल सुरम्य शरीर,
निर्निमेष नयनों से 'नरगिस' लखती यह तसवीर।

किंवा.......................

सुन्दर गति से घूम-घूम कर 'कब्कदरी' विहार करता,
'दुर्रज' घासों में से मिट्टी हटा हटा दीमक चरता।
'तीहू' और हुवारे' के कलरव से वन गूँजा करता,

कीदृशं हृदयग्राहि वर्णनमस्ति। काव्येऽस्मिन् सर्वचाऽपि कस्याऽपि विषयस्य वर्णनाय कविना प्रसादगुणमण्डिता सरला साधारणपाठकानामपि भूरित्यर्थ बोधिका भाषा प्रयुक्ता वरीवर्ति। अस्य प्रधानकारणमिदमस्ति। कविः उर्दू भाषायाः पण्डितः तत्साहित्यस्य अध्येता च। अत एव अस्य प्रारम्भिकी रचना उर्दू भाषायाः गजल वृत्तेष्वेव जाता। तद्भाषायाः प्रभावः, अस्मिन् काव्ये स्थले-स्थले दृश्यते पश्यताम्।

'बुल बुल' आ अब लगी छेड़ने प्रेम-प्रमोद तरानों को,
'गुललाला' कहती ला, ला, हाला के पैमानों को।
दिन चढ़ गया नशा उतरा है छाई बड़ी खुमारी है,
'लालपरी' शीशे में उतरी, लावो मेरी बारी है।
दरिया दिल हो जा, बसन्त है आज लुटा दे मधुशाला,
देती जा अपने हाथों से ढालूँ प्याले पर प्याला।

अत्र पद्ये 'लगी छेड़ने प्रेम प्रमोद तरानो को' दिन चढ़ गया। 'नशा उतरा छाई बड़ी खुमारी है' दरिया दिल होजा'

इत्यादि वाग्धारायाः प्रयोगच्छटा पाठकानां हृदि कामपि अर्थविच्छित्तिं चमत्कृतिञ्च जनयति। सा अनुभव गम्या। तस्याः प्रयोगच्छटा अन्यत्राऽपि द्रष्टव्या। यथा—

यदि नाम जमीला है मेरा पानी में आग लगा दूँगी।
तू मेहर बड़ी चालाक बनी तुझको मैं नाच नचा दूँगी॥

प्रकृतिवर्णनमिव वाग्धारा प्रयोगोऽपि काव्येऽस्मिन् कविना बहु कौशलेन कृतः। अनुमीमहे पञ्चशतसंख्याका द्वारा वाग्धाराः भूषयन्ति—इमं प्रबन्ध-काव्यम्। इयमपि अपरा अस्य काव्यस्य विशेषता।

मम कथनस्य नाऽयमभिप्रायः यदस्मिन् काव्ये सर्वत्रैव उर्दू प्रभाविता भाषैव वर्तते। प्रकृतिवर्णने, नूरजहाँ सौंदर्यचित्रणेऽन्यस्मिन् प्रसङ्गे च कविना संस्कृतशब्दानामपि प्रयोगो विहितः। काव्यस्य पञ्चमसर्गे प्रकृतिवर्णने यथा—

हर हरी घास झुक कर पद रज आदर से सिर लेती थी।
नगमाला में नग तरलवनी वह जग मग ज्योति जगाती थी।
पग पग पर खग स्वागत करते मग अपना आप बनाती थी॥

किंवा

तृण भी वृक्षों से होड़ लगा उठते ही जाते ऊपर।
लतिका भूषित तरुशाख-जाल में विहगों के फँस जाते पर॥
ये सघन वारिधर पुष्पों की वर्षा करते ही रहते थे।
शत शत सौरभ के स्रोत चतुर्दिक उमड़-उमड़ कर बहते थे॥

काव्येऽस्मिन् स्थले-स्थले माधुर्यसंवलितं ललितं कविना कलितं हृदय-तर्पणं प्रकृतिवर्णनं राजते। हिन्दी भाषायाः खड़ी बोली काव्येषु सशक्ता,

रससिक्ता, शोभना, स्वस्था, उत्कृष्टा प्रकृतिवर्णनपरम्परा पुरा नैवाऽसीत्। कविवर सुमित्रानन्दनपन्तमहोदयेन सेयं परम्परा प्रवर्तिता। रसभृतेषु स्वकीय रमणीय गीतेषु मनोहारिमुक्तककाव्येषु च प्राकृतिक सुन्दरतायाः यादृशं सहृदय-हृदयहारिवर्णनं चित्रणञ्च पन्तमहाभागेन विहितं तादृशमत्यमुक्तककाव्यकार कृतिषु नाऽस्ति, नाऽऽसीत्, अराजकतामये सांम्प्रतिके प्रयोगवादयुगे न भविष्यति च। कविवरभक्तमहाभागेन भव्येऽस्मिन् स्वकीये प्रबन्धकाव्ये कथाप्रसंगे यादृशं प्रासङ्गिकमनुद्वेजकं पाठकजनमनोमोहकं प्रसादगुणसंपन्नं सरलभाषायां प्रकृतिच्चित्रणं विहितं तादृशं महाकविप्रसादमहोदयेन कामायनीमहाकाव्ये हरिऔधकविना प्रियेप्रवासे, राष्ट्रकवि मैथिलीशरणगुप्तमहोदयेन साकेतनामके महाकाव्ये च न कृतम्। अधिगताऽस्मिन् विषये भक्तमहोदयेन महती सफलता ख्यातिमपि च सम्प्राप्ता। काव्येऽस्मिन् प्रकृतिवर्णनं पराकाष्ठ-मारूढमधिकं किंभ्रमः। अस्मात् कारणात् क्षेत्रेऽस्मिन् कविवरभक्तमहोदयः अद्वितीयः। अनन्वयालङ्कारस्य उदाहरणभूतः।

कृतिषु यत्र तत्र तरुणोत्प्रेरिका सूक्तिरपि विलसतितराम्।

मरना हो तो मरो देश पर पराधीनता काटो,
राना सा दाना दाना को तरसो चाहे वन में।
अथवा—
'मैंहूँ इक मर्द सिपाही मैं खेल मौत से करता'

अष्टादशसर्गे काश्मीरस्याऽपि रोचकं वर्णनमपि वर्तते।

सुरभिमय केशर के ये खेत शिखर वे हिम आच्छादित श्वेत।
तरणि कर कर में करते चम चम, हुआ जब हेम रजत संगम।
विविध हिमस्रोतो में हिम खंड किये लउ लउं कर नाद प्रचंड॥

... ... ... ... ... ...

सुसन्ध्या दिनकर पारस बन, स्वर्ण करता हिम, जीवन, घन।
निर्झरों के फुहार पर चढ़, इन्द्र धनु, अगणित देता गढ़॥

काव्येषु नाटकीयसंवादात्मिका वाक्चातुरी संवलिता पद्यावलिरपि दरीदृश्यते सप्तमसर्गेमेहरस्य स्वप्नवर्णन प्रसङ्गे। यथा—

मुझे देखकर पड़ी यहाँ पर आपस में मुसुकाई।
बोली एक चलो सुरपुर में तुम्हें बनावें रानी',
कहा दूसरी ने—'मत जाना, होवेगी हैरानी'।
कहा तीसरी ने—'इसको मैं दूँगी देश निकाला'
चौथी ताज दिखाकर—'पहनोगी तुम बाला?'
मैंने कहा 'नहीं, फिर भी वे मुकुट पिन्हाने आईं।

उक्तिवैचित्र्यरञ्जितः एतादृशः स्थलविशेषः काव्येषु बाहुल्येन वर्तते। दिङ्मात्रमत्र प्रपञ्चितम्।

महाकाव्येऽस्मिन् मदिराप्रियनूरजहाँपितुः गयासस्य, तदीयमनस्विभार्या बेगमस्य, काफिला सरदारस्य, अनारकली गणिकायाः, प्रधाननायिका नूरजहाँयाः, व्यङ्ग्योक्तिनिपुणस्वार्थपरायणजमीलायाः, सम्राट्शिरोमणेः कूट नीतिज्ञ अकबरस्य, अस्य काव्यस्य प्रधाननायक सौन्दर्यप्रियजहाँगीरस्य, गुप्तरूपेण जमीलोपासककुतुबुद्दीनस्य, सैनिकनाहरसिंहस्य, मुसाहिबशेरअफगनस्य नाहरसिंहवीरपत्न्याः, जहाँगीर कुट्टनीदूतिकायाः प्रबन्धकाव्योचितम् सरसं वर्णनं कविना स्थाने-स्थाने कृतं दृश्यते अधिकं किं ब्रूमः। काव्यमिदम् अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः इति प्राचीनसूक्तेरुदाहरणं मन्यताम्।

(आकाशवाण्याः सौजन्यात्)

शिवशङ्कर त्रिपाठी



# ग्रन्थ-समीक्षा

१. पूर्णपात्रम् २. त्रिकम् ३. रामदासम् ४. भर्तृदानम् ५. कचे-देवयानीयम् ६. संयुक्तास्वयंवरम् ७. नन्दचरितम् ८. आन्ध्रप्रदेश-स्यकथा ९. विवेकानन्दम् । लेखकः सन्निधानम् श्री सूर्यनारायण शास्त्री, प्राप्तिस्थानम्: ४४ जीरा कम्पाउन्ड सिकन्द्राबाद (आन्ध्रप्रदेश:)।

पूर्णपात्रम्---काव्यसङ्ग्रहोऽयम् । संग्रहस्य प्रथमेभागे—'परमहंसकथा' शीर्षकान्तर्गत साक्षात्कारः, प्रेक्षकः, कूपमण्डूकः, मणिविक्रयः, पार्थगर्वभङ्गः, तरणोपायः, गोविन्ददर्शनम योगप्रभावः, द्वितीयेभागे-एकलव्यम्, रुरुप्रम-द्वरम्, चिक्रोडकथा, मानपरीक्षा, पुष्पावचयः, तथा तृतीयेभागे तृणकणाः इति शीर्षकाः कविताः सङ्कलिताः । सर्वा कविताः स्वतंत्ररूपेण रचिताः प्रतीयन्ते, किन्तु तत्रास्ति सहृदयपाठकानां कृते मधु-मधुर भावानां स्रोत-उद्रेकाः 'अर्थवैमल्यं प्रसादः' इति 'वामन' महाभागानाम् उक्तिः सर्वासु कवितासु चरितार्था प्रतीयते । यथा—

नियुक्ताः किंकरास्तेन, किंकर्यश्चशतं गृहे ।
तत्क्षेत्रं सूयते स्वर्णं, सामन्तोऽस्तेऽभवद्व्रतिः ॥

त्रिकम्-- कीरकसन्देशविप्रवीरम्मतुकोशश्च, इति त्रयाणां काव्यानां सङ्कलनमिदंत्रिकं काव्यम् । कीरकसन्देशस्तु 'मेघदूतादीनां काव्यपरम्परासु रचितं नूतनं दूतकाव्यमस्ति । काव्येऽस्मिन् भीमसेनगृहे चिरपोषितस्य शुकस्य रुक्मणी-प्रणय-सन्देशहरो भूत्वा, श्रीकृष्णसकाशं गमनम्, तत्र

रुक्मण्याः रूपलावण्यस्य कथनं, तस्याः मनोदशा एवं हृदयेऽङ्कुरितानां मधुर-रागानुरागाणां वर्णनम् ,इत्थं श्रीकृष्णस्य मनसि तस्याः कृते आकर्षणोत्पादन-चेष्टितम् च कविना सरसशैल्यां गुम्फितम् । द्वितीये 'विप्रवीरम्' काव्ये, आन्ध्रप्रदेशेतिहासस्य खड्गतिक्कनामधेयस्य वीप्रवीरस्य शौर्यकथा निबद्धाऽस्ति । प्रथमतः खड्गतिक्कोऽयं भीषणसंग्रामे स्वपक्षीयवीरेषु विपक्षसैनिकैर्हतेषु भयाक्रान्तो भूत्वा गृहं प्रतिपलायितः । तत्र सः पौरजनैः बहुशो भर्त्सितः । भार्याऽपि कोटिशः निन्दितवती । पौरजनानां कुटुम्बिजनानां च कटुभर्त्सनां श्रुत्वा सः पुनः द्विगुणितोत्साहेन रणाङ्गणमलंकृतवान् । तत्र युद्धे शतशः विपक्षसैनिकान् हत्वा स्वैयं वीरगतिं लब्धवान् । तृतीय मधुकोशः भर्तृहरिशतक, गाथासप्त-शतीइत्यादि काव्यपरम्परासु रचितं ललित-नीतिपरक मुक्तककाव्यमस्ति ।

वीप्रवीरम् काव्ये विस्मृतराष्ट्रभक्तस्य कीर्तिज्योत्स्नां प्रसार्य शास्त्रिमहा-भागेन भारतस्य राष्ट्रीय-सांस्कृतिकादर्शस्य प्रतिस्थापनं कृतम् । त्रिष्वपि काव्येषु परिमार्जितभाषा, ललितपदावली, प्रसादगुणपूर्णा शैली च पाठकान् मोहयन्ति । श्रृण्वन्तु तस्य वीरस्य खड्गतिक्कस्य भार्यायाः कथनम्—

आदात्पितामां पुरुषं भ्रमित्वा,
तुभ्यं विवाहे पुरुषस्स उक्तः ।
यः पौरुषेणावगण्य्य शत्रून्
जृम्भेत रूपेण तु पूरुषस्त्वम् ॥ ६१

रामदासम् -भद्राचलम् रामदासेति कथातु दक्षिणभारते बहुश्रुताऽऽस्ति । अस्य 'भद्राचलम्' मन्दिरस्य निर्मातारः 'गोपन्ना' नामधेय महाभागाना-माख्यायिका देवभाषायां काव्यमयरूपेण सरसशैल्यां निबद्धा । अयं गोपन्ना स्वमातुलप्रभावेण तत्कालीन शासकेन अबुलहसनमहाशयेन 'तहसीलदार' पदे नियुक्ताऽऽभूत् । स गोपन्ना महान् रामभक्तः । स निरन्तरं प्रभुकीर्तनेन स्वकालं यापयतिस्म । कररूपेण प्राप्तं अतुलधनराशिं राममन्दिर निर्माणार्थं नियोज्य स्वजीवनस्य महल्लक्ष्यमपूरयत् । करस्य धनराशिं कोषागारे न

प्रेषितवान् स गोपन्ना । इति अपराधे स तेन यवनशासकेन कारागारे प्रेषितः। तत्र कारागारेऽपि स अहर्निशंरामस्य गुणानुवादमकरोत् । अन्ततोत्वा एकरात्रौ रामः स्वानुज लक्ष्मणेन सार्धं तत्रोपसृत्य तस्य स्वभक्तस्य ऋणं यवनराजायप्रदाय प्राप्तिपत्रकमादाय तत्गोपन्नायदत्वा प्रछन्नोऽभूत्। इदमेव कथानकं श्रीशास्त्रिमहाभागेन 'रामदासाख्ये लघुकाव्येऽस्मिन् सुललितभाषया निबद्धम्। भाषा सरला, शैली मनोहरा, घटनासंयोजनं च स्वाभाविकम्। काव्यमिदं पठनीयम्।

भर्तृदानम्—अस्य 'भर्तृदानम्' काव्यस्याधारः पुराणेषु वर्णितम् पारिजातहरणाख्यानमेव प्रतीयते। किन्त्वत्र शास्त्रिमहाभागेन तेलुगुकवि मुक्कुतिम्मनरचित पारिजातहरणम् 'एवं' मुत्तुराजु-सुब्बाराजु रचित श्रीकृष्णतुलाभारनाटकयोरपि साहाय्यं गृहीतम्। काव्यस्यास्य तु कथासंयोजनमेवम्—प्रथमांशे देवेशेन पारिजातहरणाशङ्कया सहर्षं तस्य श्रीकृष्णाय प्रदायनम् तथा अपरांशे—सत्यभामायाः चरणयोः नतं श्रीकृष्णंप्रतिपादताडनम् तस्याः पुण्यकव्रतविधानं च वर्णितम्। व्रतोपरान्ते पुरोहितकरे समर्पितं स्वभर्त्तारं श्रीकृष्णम् आभरणादिप्रदानेन ( तुलादानेन ) प्राप्तुं सा सत्यभामाऽऽक्षमाऽऽसीत्। किन्तु रुक्मिण्या स श्रीकृष्णः तुलसीदलानां तुलादानेन लब्धः। इत्थं सत्यभामा पराजिता लज्जिता चाभूत्। काव्यस्य भाषा तु अतीव सरला, वर्णनाशैलीबोधगम्या। पठनीयं संग्रहणीयं चेदं काव्यम्। द्रष्टव्यम्—

सरस्वतीं हैमवतीं रमासतीम्, शचीं विहायाहीत नान्यसुन्दरी।
प्रसूनमेतद् भवती च सर्वदा, हरिप्रिया तत्प्रहशीदमर्हति॥

कचदेवयानीयम्—कचदेवायानीयकथेयं महाभारते वर्णिताऽस्ति। पुराणे वर्णिता कथा श्रीमद्भिः शास्त्रिभिः स्वप्रतिभाकल्पनाकाव्यकौशलैः चमत्कारपूर्णाकृता परिवर्तिता च। देवैः प्रार्थितः सन् बृहस्पतेः पुत्रः कचः सञ्जीवनीविद्याहरणायासुरगुरोः शुक्रस्य सकाशं गतः। तत्र गत्वा तस्य शिष्यत्वं च अङ्गीचकार। तत्र निवसन् कचः शुक्रस्य पुत्र रूपेण शनैः शनैः तस्य पुत्रि-

काया देवयानेः स्नेहं प्राप्तवान्। द्वयोर्मध्ये रागानुरागाणां भावाः गाढतां गताः। कचः देवयानीं सहोदरां मन्यमानः भगिन्यामिव स्निह्यति स्म। एकदा स कचः कानने गोचारणावसरे असुरैः हतः। देवयान्याः क्रन्दनेन द्रवितः शुक्रः तं मृतसञ्जीवनीविद्या-प्रभावेण जीवितमकरोत्। पुनः असुराः तं हत्वा पावके भस्मीचक्रः। एवं तं भस्मीभूतं कचं सुरामिश्रितं पेयं निर्माय ते दानवाः शुक्रमपाययन्। पुनः सा देवयानी तस्य कचस्य जीवनं कामयमाना विलपन्ती स्व पितरं प्रार्थितवती। दिव्यदृष्ट्या शुक्रेण तं स्वोदरे ज्ञात्वा सञ्जीवनी-विद्यायाः प्रयोगः कृतः। कचेन 'भवत्प्रसादादहमस्मि जीवितः' इति कथयन् शुक्रस्योदरं विदार्य बहिरागतः। तथा पुनः स सञ्जीवनीप्रभावेण तं शुक्रमपि अजीवयत। काव्यस्यास्य सुमधुरभाषाशैल्याश्च उदाहरणानि--

परां गुरोस्तद्दुहितुश्च रागितां, विलोक्य सेर्ष्यं कुधियः सुरद्विषः।
हरेन्नु विद्यां मृतजीवनीं गुरोरितीममाशङ्क्य निहन्तुमुद्यताः।'

... .... ...

स देवयानीं ब्रुवतीं तथात्मजो, बृहस्पतेराह पुरा त्वया यथा।
मयापि लभ्या पितृदेवसम्मतिः स्वस र्नमे ह्रत्प्रभुधर्मनिर्णये ॥

संयुक्तास्वयंवरम्---काव्येऽस्मिन् हिन्दूसम्राट् पृथ्वीराजं प्रति वर्धितानां संयुक्तायाः गाढानुरागाणां मधुरकथा गुम्फिता। काव्येऽस्मिन् सप्तविभागाः। तत्र प्रथमेविभागे—संयुक्तारूपलावण्य-वर्णनं, द्वितीयेविभागे-संयुक्तायाः परिणय-बन्धनं प्रति असहमतिः, तृतीयविभागे—पृथ्वीराज-परिचयः, चतुर्थे— पृथ्वीराजं प्रति तस्याः संयुक्तायाः आसक्ति-संकेतः, पञ्चमेविभागे—स्वयंवरा-योजनं, तत्र स्वयंवरे पृथ्वीराजस्य-बहिष्कारः कृतो जयचन्द्रेण, अतः निमन्त्रण-पत्रिका न प्रेषिता, अन्तिमे सप्तमेविभागे—पृथ्वीराजेन स्वयमेवोपसृत्य संयुक्ता-हरणं वर्णितम्। काव्ये आर्याऽऽनुष्टुपछन्दसोः प्रयोगः पाठकानाम् अर्थबोधाय सहायक एव दृश्यते। शृङ्गाररसप्रधानत्वात् काव्ये वियोगसंयोगयोरुभयोः

समीचीनं चित्रणं प्राप्यते। संयुक्तायाः सौन्दर्य-वर्णनं कविना प्राकृतिक-उपादानमाध्यमेन मनोहरया भाषया ईदृशमङ्कितम्—

त्वं पिकश्चूतवल्ली सा, शुकस्त्वं स्वादु सा फलम्।
तरुस्त्वं वल्लरी कन्या, योगो वामुचितो भवेत् ॥४।५

नन्दचरितम्--काव्येऽस्मिन् शूद्रकुलोत्पन्नस्य नन्दनारनामधेयशिव-भक्तस्य कथा निबद्धाऽऽस्ति। स एकदा शिवदर्शनाय मन्दिरं गतः। देवलेन तस्य मन्दिरप्रवेशो निषिद्धः। अतः परिक्रमां कुर्वन् स शिवस्तुतिं कृतवान्। ततः परावृत्य स एकस्य द्विजस्य गृहे हलकर्षण-कार्ये रतोऽभूत्। पुनः स एकदा चिदम्बरस्थितं नटराजं प्रति आकृष्टोऽभूत्। किन्तु दर्शनाय पुनरपि स तेन ब्राह्मणेन निषिद्धः। निराशः स एकस्मिन् सरोवरे तपश्चर्यां प्रारभत। तुष्टः शिवः जनान् 'नन्दनारं मन्दिरं प्रवेशय' इति स्वप्ने आदिष्ट-वान्। इत्थं स। पुनः शिवार्चनं कृतवान्। भाषासरला, भावाः बोधगम्याः सन्ति। द्रष्टव्यम्—

रुद्राक्षमाल्यानि गले दधाना, विभूतिपुण्ड्रान् वदने वहन्तः।
भस्मावलिप्तानि च गात्रकाणि, धरन्त आयान्ति च यान्ति संघाः॥

× × ×

भक्तो मदीयः किल नन्दनामा, चाण्डालवंश्योऽपि पवित्रमूर्तिः।
मदालये नानुमतप्रवेशः, सरस्तटस्थः कुरुते तपस्याम्॥

विवेकानन्दम्--सरसभाषा ललितपदावली-निबद्धमिदं काव्यं स्वामी-विवेकानन्दस्य समग्रजीवनस्य दार्शनिकविचाराणां च सफल परिचायकम्। नेदं, सर्गबद्धम्। जीवनघटनानुसारेणास्मिन् विभागाः सन्ति, यथा—अवतारिका, बाल्यम्, विद्यालयः, कलाशाला—जीवितम्, गवेषणा, राम-कृष्ण-सन्दर्शनम्, वनितावैमुख्यम्, दारिद्र्यम्, प्रार्थना च, उपदेशः, पुण्यक्षेत्रयात्रा, प्रतिमाराधनम्, प्रत्युत्तराणि, अभिनन्दनानि, लण्डनसमागमः, अमेरिकाप्रत्यागमनम्, महिलासमितिलेखः, मातृदेशागमनम्, सिंहलयात्रा, एवं निर्वाणः इत्यादि।

काव्य-सौष्ठवं, पद-लालित्यं, भाषा-वैभवकल्पना-ऐश्वर्यं च दर्शनीयम्। प्रसादगुणपूर्णमिदं काव्यं न केवलं विवेकानन्द-जीवन-परिचायकम् अपितु सुरसिकसहृदयपाठकान् रसानन्देऽपि निमग्नान् कर्तुम् सर्वथा क्षममस्ति। सरलसरसच्छन्दस्सु तत्रानुप्रासयमकरूपकादिविविधालङ्काराणां छटाऽपि दर्शनीया--

न केवलं निर्गुणमेव किन्तु-ब्रह्माप्युपास्यं सगुणं नरेन्द्र।
अन्तर्बहिस्तुल्यरसा घुटीहि, स्वादीयसी शार्करखण्डवल्लसा॥
सर्वत्र तस्यैव यशः पताका, सर्वत्र तस्यैव प्रतिबिम्बकानि।
सर्वत्र तस्यैव प्रतिभाप्रशंसा-अमेरिकायामभवत्तदात्वे॥

प्रसादवैभवमपि—

प्रयातुकामं यतिमार्यगृह्यम्,
बंगान् समाहूय तरंगहस्तैः।
विधृत्य मूर्ध्ना जलधिर्विवेका—
नन्दं झटित्येव निनाय वन्द्यम्॥
वृद्धा, युवानो, युवतीजनश्च,
बालाश्च विद्वज्जनपामराश्च।
यथा 'सिनीमा' मगमन्नमुष्य,
दिव्यामुपन्याससभां प्रमुग्धाः॥

आन्ध्रप्रदेशस्य हास्यकथाः—आन्ध्रप्रदेशे 'तेनालिरामलिंगम्' इति नामधेयः कविः स्ववाक्पाटवाय प्रसिद्धः। तस्य विविधाः हास-परिहासभाव-युक्ताऽऽख्यायिकाः सर्वत्र प्रचलिताः। अयं रामलिंगम् कविः विजयनगराधिपस्य श्रीकृष्णदेवरायस्य राजसभायां सम्मानितेषु अष्टविद्वत्सु एको विद्वान् असीत्। तस्यैव प्रचलिता कथा श्रीशास्त्रिणा संस्कृतभाषायां निबद्धा। अपरोऽपि एकः कविः परमानन्दनामाऽऽसीत्। तेन स्वशिष्यान् उपदेष्टुम् अनेका मनोरञ्जक-कथा निर्मिताः। ता अपि कथाः तत्र दक्षिणाञ्चले प्रख्याताः। तासामपि अत्र संकलनं कृतम्। इत्थमस्य कथापुस्तकस्य प्रथमे भागे तेनालिरामलिङ्गकथा, अपरे भागे कथाः परमानन्दशिष्याणाम्, संगृहीताः। भाषा तु अतीव सरला। सर्वथा मनोरञ्जकमिदं पुस्तकमवश्यं पठनीयम्। *

# अनुसन्धानसंस्थानस्य विषये



महामहोपाध्याय पण्डित लक्ष्मीनारायणद्विवेदिनः पत्रम्

[विगतनवम्बर' ६६ मासस्य ७ (सप्तम) दिनाङ्के महामहिमराष्ट्रपति-महोदयाः प्रयागस्थगंगानाथझाशोधसंस्थानस्य शिलान्यासं कृतवन्तः। तमधिकृत्य शिलालेखस्य त्रुटिविषये किमपि निवेदनमत्र। ]

तिर्वा (फर्रुखाबादः) उ० प्र०

दिनांकः १० ११-६६

अभिन्नसौहार्दरससान्द्रहृदयेभ्यः श्रीप्रभातमिश्रमहोदयेभ्यः स्नेहं नमस्कारः।

प्रतिदीपमालिकोत्सवमिह श्रेष्ठिन एकस्य गेहे मया निशि लक्ष्मीयागः कारयितव्यो भवतीति तद्व्यासङ्गेन तिर्वाम् प्राप्य इतः पत्रं लिखामि।

भवतां सौजन्येन सुव्यवस्थया च मया वार्धक्यशरीरस्थेनापि न कश्चन कष्टलेशोऽप्यन्वभावि प्रयागे।

भवतां तत्रभवतां तत्र तत्र विख्यातिरिति सम्भावना मां किञ्चना-वक्तव्यमपि वक्तुं नियुनक्ति, आशासे च याचे च क्षमां, किमपि मे पथ्यं वचः कटुकषायपेयमिव भवतेऽपि न रोचेत। न वच्मि चेत्—दूरदूरचारी विकारी गद इव दोषो दोषज्ञानां पुरः स्फुरिष्यति। श्रीविद्यावाचस्पतिगङ्गानाथझा-महोदयानामनुसन्धानशालाशिलान्यासश्लोकेऽवधातुमर्हन्ति भवन्तः —

"भारतराष्ट्रपत्यार्यगिरेः पत्नी सरस्वती।
वाराह्व्यङ्कटस्याद्य प्रयागे तीर्थनायके॥

रसनेत्रखनेत्राब्द ऊर्ज्जकृष्णत्रयोदशी ।
भृग्वह्नि खैष्टनवषण्णवैकाब्दे नवम्बरे ॥
सप्तमेऽह्नि गुरोर्गङ्गानाथझोपज्ञनिर्मितेः ।
पूर्तये शोधशालायाः शिलान्यासमिहाकरोत् ॥"

पद्ययोरनयोश्चिन्त्या अंशा एतेऽनुपदं दर्श्यन्ते—

१.त्रयोदशी २. भृग्वह्नि ३. षण्णवैकाब्दे ४. गुरोर्गङ्गा०

१. 'भृग्वह्नि' 'सप्तमेऽह्नि' इति कालस्याधिकरणत्वप्राधान्येन 'त्रयोदशी' इत्यनधिकरणपदस्य कालेन समन्वयो न भवति ।

तिथेरपि कालवाचकत्वात्तत्समानाधिकरणवारस्यैव विभक्तियोगौचित्यात् । न च तिथिवारयोरैककालिकयोर्वैयधिकरण्यं सिद्ध्यति, येन विभक्तिभेदः स्यात् । न चाकरोत् इति क्रियावाचकत्वं 'त्रयोदशी' ति प्रथमान्तस्य । अकारकत्वात् । न च प्रथमासामानाधिकरण्येन 'अभूत्' इत्यादिक्रियापदाध्याहारो हृदयं स्पृशेत् ।

२. 'भृग्वह्नि' । भृगोरहः इति षष्ठीसमासे सति 'राजाहः सखिभ्यष्टच्' इति शास्त्रं व्यापादयितुं न शक्यते । 'भृग्वहे' इति कर्त्तव्ये समासान्तविरहः कण्टककरकायते ।

३. 'षण्णवै०' । ष्टुत्वम् ? नामनवतिनगरीणामेव ष्टुत्वनिषेधो निवार्यते वार्तिककृद्भिः, न पदान्तादिति सूत्रे । न च 'नवति' इति समुदायैकांशो 'नव' इत्यनर्थको णत्वविधौ ग्रहीतुं शक्यः ।

४. 'गुरोः' । न हि 'गङ्गानाथझा' इत्यस्य समासगतत्वेनास्वतन्त्रपदस्य पदान्तरेण स्वतन्त्रेणान्वय उपपत्तुं युज्यते । ततो 'गुरोः' इति सम्बन्धवाचकस्य पदस्य का गतिः ? न च 'गुरोः' इति पदस्य शोधशालायाम्—इत्यनेनापि सम्बन्धः कर्तुं शक्यते । तत्सम्बन्धसूचकसन्निहितपदान्तरेणैव 'शोधशालायाम्' इत्यस्य सम्बन्धावगतेः । अन्यथा 'गङ्गानिर्मितेः' इत्यस्य पूर्तये—इत्यनेन सम्बन्धे स्वीकारेऽपि 'गुरोः' इति गुरुपदवाच्योऽन्यः पुरुषः, गङ्गानाथेति पदवाच्यश्चेतर इति, भेदप्रतिपत्तिर्दुर्निवार्या स्यात् ।

जाने, अवैयाकरणेन केनापि निर्मितमिदं पद्यद्वयम् । भवद्भिश्च तत्राव-धानं कर्तुं न पारितम् ।

अथ यथावस्थलेखाङ्कितैषा शिला न्यस्ता चेत् उत्तरोत्तरं प्रेक्षावतां चक्षुःसाद् भूतं पद्यद्वयमिदं कां भवादृशेष्वास्थां प्रतिपादयिष्यति ? अलमिति बहुश्रुतेषु ।

भवदीयः,

लक्ष्मीनारायण द्विवेदी

●

# कुक्कुर !

अशनमाचर काञ्चनभाजने
त्वमिह कुक्कुर ! मा कुरु विस्मयम् ।
इह तु पामरमन्दिरनायके
न हि सतामसताञ्च विवेचनम् ॥

—कस्यचित्

डा० जयशङ्कर त्रिपाठी

●

# वत्सराजस्य हास्यचूडामणिः प्रहसनम्

भारतीयेतिहासे राजपूतकालस्यान्तिमे समये परमर्द्दिदेवनामा राजा कालिञ्जर-भूखण्डस्य प्रशासको बभूव। चन्देलवंशीयोऽयम्। अस्यैव पूर्वजा अधुना 'खजुराहो' इति नाम्ना प्रसिद्धानां मन्दिराणां, तेषु उत्कीर्णकलाखचितप्रतिमा-सहस्राणां च निर्मातारो बभूवुः। एते राजानः यथैव कलारसिकाः तथैव च युद्धप्रिया वीराश्च आसन्। परमर्द्दिदेववर्मणो राजसभायां तस्य महामात्यो वत्सराजनामा कविः संस्कृतनाट्यकारो युद्धे कृपाणधारी वीरश्चासीत्। अस्य राज्ञः कवेश्च समयो द्वादशशताब्दी चास्ति। अयं महान् नाट्यकारः षट् नाटकानि विरचयामास। तानि परमर्द्दिदेववर्मणः तस्य पुत्रस्य च राजत्वकाले अभिनीतानि बभूवुः। अत्र प्रस्तूयतेऽस्य नाट्यकारस्य हास्यचूडामणि-प्रहसनस्य सम्पादितं रूपम्। चिरायानुपलब्धमिदं प्रहसनम् अभूत्। 'संगमनी'-पाठकानां कृते समुपस्थाप्यते। अस्मिन् प्रहसने तात्कालिकसमाजस्य दर्शनम् भवति, नाट्यरूपेणास्य महत्त्वं समाजचित्रणेन सहैव साफल्यमतिशेते।

●

# हास्यचूडामणिः प्रहसनम्

## प्रथमोऽङ्कः

कल्याणं वितरन्तु वः पृथुजटाजूटाग्रविस्तारिण—
स्ते चूडाशशिनः शिरःसुरधुनीधारानुकाराः कराः
यानुत्प्रेक्ष्य मदोष्मभारविधुरे शुण्डारदण्डं मृषा
हेरम्बे घटयत्यनारतमभूदुल्लासिहासो हरः ॥१॥

अपि च—

भूयिष्ठाः परिरम्भकेलिषु भुजाः सोत्कण्ठमालोकने
नेत्राणि प्रचुराणि चुम्बनविधौ भूयांसि वक्त्राणि ते ।
इत्थं भूरिवधूविलासघटनासज्जस्य काऽहं तव
प्रोक्तः क्रोधविरुद्धयेति शिवया स्मेरो हरः पातु वः ॥२॥

( नान्द्यन्ते )

सूत्रधारः—(नभोऽवलोक्य) अये विभातैव शर्वरी । (प्रतीचीमवलोक्य) अहह ! समय एव सर्वं शोभते । तथाहि—

नवविचकिलमालामांसलैर्यैस्तदानीं—
मदनमयमशेषं विश्वमेतद् व्यधायि
चरमशिखरिशीर्षे सन्निविष्टास्त एते
दधति पलितभङ्गिं भानवः श्वेतभानोः ॥३॥

अये ! तन्ममापि जरापराधीनस्य हास्यकर एवायं नाट्याभियोगः ।

पारिपार्श्वकः—(प्रविश्य) भाव ! हासो य्यव अज्ज रमणिज्जो जं एस नीलकंठजत्तामहूसवसमागदेहिं विड्ढसामाजिएहिं परिअरिदो राआ परमड्डिएवो

अत्तणो अमच्चेण कविणा वच्छराएण विरइदं हासचूडामणिं णाम पहसणं अहिणंदुमादिसदि भवंतं ।[1]

सूत्र०—(सहर्षम्) आः ! सम्यगनुगृहीतोऽस्मि । अयमेव देवो रूपकनिरूपणानैपुणैकपात्रम् । (साश्चर्यमाधूय शिरः)

गेहेषु प्रसभं सदैव विदुषां सापत्न्यवैरग्रहा—
दासीकर्तुमनारतं वितरणक्रीडाभिरब्धेः सुताम् ।
एष श्रीपरमर्द्दिदेवनृपतिर्निस्सीमविद्यानिधि—
र्नूनं वागधिदेवता भगवती पुम्भावमभ्यागता ॥४॥

मार्ष ! तद्गच्छ सज्जीक्रियन्तां कुशीलवाः । पूर्णाः सम्प्रति मे मनोरथाः । यतः—

परिषदियमुदारज्ञानसौजन्यधन्या
रसपरवशवाणीवत्सलो वत्सराजः ।
अयमपि नटवर्गो नाट्यमुद्राप्रतिष्ठः
फलति सुकृतराशिः प्राक्तनः कोऽप्ययं मे ॥५॥

( नेपथ्ये गीयते )

पत्तुं णिअसंपत्तिं परिमुसिअं विसमतिमिरचोरेण ।
एसा अम्बरलच्छी भअवन्तं सुरमणुसरदि ॥६॥[2]

सूत्र०—(श्रुत्वा सहर्षम्) मार्ष ! सज्जा एव कुशीलवाः, यदियं कपटकेलिकुट्टन्याः प्रावेशिकी ध्रुवा गीयते । तदेह्यावामनन्तरकरणीयं सम्पादयावः ।

(इति निष्क्रान्तौ) । (प्रस्तावना)

---

१. भाव ! हास एवाद्य रमणीयो यदेष नीलकण्ठयात्रामहोत्सवसमागतैः विदग्धसामाजिकैः परिचरितो राजा परमर्द्दिदेव आत्मनः कविना वत्सराजेन विरचितं हास्यचूडामणिं नाम प्रहसनमभिनेतुमादिशति भवन्तम् ।

२. प्राप्तुं निजसम्पत्तिं परिमुषितं विषमतिमिरचोरेण ।
एषाऽम्बरलक्ष्मीर्भगवन्तं सूरमनुसरति ॥

( ततः प्रविशति सुप्तोत्थिता कपटकेलिः )

कपटकेलिः—(विभाव्य) अहो पच्चूहो संवुत्तो। संचरिदा दाव गवक्खजालन्तरे पुराणसीधुधारासोअरा सूरस्स बालकरा। कधं मह मइरापाणभरालसाए एक्कणिद्दापय्येव रअणी वोलीणा। ( स्मृतिमभिनीय सहर्षोत्कण्ठम् ) अएपओससमअमइराए महुरत्तणं ! ता संपइज्जेव तं आणइस्सं। ण हु अगिहीदमुव्वरदि रमणीयं वत्थु।[1]

चेटी—( निःश्वस्य ) अत्तिए ! एवं णेदं। ण हु अगिहीदमुव्वरदि रमणीयं वत्थु। जं तुह चिरआलसंचिदो सो आहरणसंचओ अय्य रअणीए चोरेहिं गहिदो।[2]

कपटकेलिः—(ससम्भ्रम्) कुसुमिए ! किं कधेसि ![3]

कुसुमिका—एवं णेदं।[4]

कपटकेलिः—(स्वगतं सविषादम्) कधं विषपरिणदीए परिणदं मइराए जं मुदव्व सुत्तम्हि। (प्रकाशम्) ता किं संधी दिण्णो।[5]

---

१. अहो प्रत्यूषः संवृत्तः। सञ्चरिता तावद्गवाक्षजालान्तरे पुराणसीधुधारासोदराः सूर्यस्य बालकराः। कथं मम मदिरापानभरालसाया एकनिद्रापदे एव रजनी व्युल्लूना। अये प्रदोषसमयमदिराया मधुरत्वम् ! तत्सम्प्रत्येव समानेष्ये। न खलु अगृहीतमुच्चरति रमणीयं वस्तु।

२. अम्ब ! एवं न्विदम्। न खलु अगृहीतमुच्चरति रमणीयं वस्तु। यत्तव चिरकालसंचितः स आभरणसंचयो अद्य रजन्यां चोरैर्गृहीतः।

३. कुसुमिके ! किं कथयसि ?

४. एवं न्विदम्।

५. कथं विषपरिणत्या परिणतं मदिरया, यन्मृतेव सुप्तास्मि। तत्किं सन्धिर्दत्तः ?

कुसुमिका—ण हु ण हु ।[1]

कपटकेलिः—दुआरमुग्घडिदं ।[2]

कुसुमिका—ण हु ण हु ।[3]

कपट०—ता किं नेदं ।[4]

कुसु०—विहावेदु अय्युआ ।[5]

कपट०—(विमृश्य स्वगतम्) णूणं एदाए मह धूआए तस्सिं कलाकरंड-अजूदअरे अत्थसुण्णेवि अणुरत्ताए एस वावारो भविस्सदि। हद्धी ! हद्धी ! ण हु ण हु अम्हाणं घरे एआरिसी कुलमहिला कावि सुणीअदि जा सव्वंचिअ भुअंगे अणुरज्जदि । एदाए चोरिआए एसम्हघरे कलहो विपत्थाविदो । (प्रकाशम्) कुसुमिए ! ता कस्स वि णाणिणो मुहेण एदं पयासइस्सं । अत्थि इत्थ जिण्णुज्जाणमढम्मि केवलीनाणनिउणो नाणरासी नाम भअवो । ता पुच्छिदुं गमिस्सं । जाग्गवेसु मुग्गरअं जहा एसोवि अणुअरो भोदि ।

---

१. न खलु न खलु ।

२. द्वारमुद्घाटितम् ।

३. न खलु न खलु ।

४. तत्किं न्विदम् ?

५. तत्किं न्विदम् ।

६. विभावयतु आर्या ।

७. नूनमेतस्या मम दुहितुः तस्मिन् कलाकरण्डकद्यूतकरे अर्थशून्ये ऽपि अनुरक्ताया एष व्यापारो भविष्यति । हा धिक् ! हा धिक् ! न खलु अस्माकं गृहे कुलमहिला कापि श्रूयते, या सर्वथैव भुजङ्गे अनुरज्यते । एतया चौरिकया एषोऽस्मद्गृहे कलहो विप्रस्तावितः । कुसुमिके ! तत्कस्यापि ज्ञानिनो मुखेनैतत् प्रकाशयिष्ये । अस्ति अत्र जीर्णोद्यानमठे केवलीज्ञाननिपुणो ज्ञानराशिर्नाम भगवान् । तत्प्रष्टुं गमिष्यामि । जागरय मुद्गरकं यथा सोऽपि अनुचरो भवति ।

कुसु०—मुग्गरश्र ! मुग्गरश्र ! जग्गेसु जग्गेसु । (चेटस्तथैव शेते) बाढं खु दट्ठो एस णिद्दोरईए । नीलकंठो जइ इमं जग्गावेदि ।[1]

कपट०—अहं जाणेमि एदस्स कए कण्णजावं । मोग्गरश्र ! मोग्गरश्र ! जग्गेसु जग्गेसु । अणेसु तं सुचक्खिदं कडुय मइरं ।[2]

चेटः—कुसुमिए ! गेन्ह गेन्ह भाअणाइं ।

कपट०—वच्छ मुग्गरश्र ! अहं तुमं पि दाव गच्छम्ह याव कुसुमिआ भाअणाइं पक्खालिअ आणेदि ।[4] ( इति परिक्रामतः )

चेटः—अत्ता ! किं उण अण्णदो कुदोवि चलिदासि ।[5]

कपट०—(सविषादम्) मुग्गरश्र ! ण सुदं तए अज्ज अत्तणो घरवुत्तन्तं । तं खु चिरआलसंचिदसव्वस्सं अज्ज चोरेहिं मुसिदं । ता उज्जाणमढवासिणं केवलीणाणणिउणं भअवन्तं णाणरासिं पुच्छिदुं गमिस्सं ।[6]

चेटः—(स्वगतं सहर्षम्) जीवध, रे चोरआ जीवध ! सुहपरिणामो भोदु तुम्हाणं एस वावारो । ण हु एसा हआसा मुहुत्तमेत्तंपि उवरमदि अम्हारिसस्स घरअणस्स अणत्थपरंपराओ पत्थावअन्ती । (प्रकाशं सखेदमिव)हद्धी हद्धी, अता किं एदं संवुत्तं । ण तहा मं बाधेदि अत्थणासो जहा अज्जुआ वि मुसिदत्ति पराहवो । ण हु अग्गी केणवि दद्धो सुणीअदि । अहवा दिव्वाहीणा धणहाणी । णत्थि पराहवो तहा अ—

---

१. मुद्गरक ! मुद्गरक ! जागरय जागरय । बाढं खलु एष दष्टो निद्रोरगया नीलकण्ठो यदीमं जागरयति ।

२. अहं जानामि एतस्य कृते कर्णजापम् । मुग्दरक ! मुग्दरक ! जागृहि जागृहि, आनय तां स्वास्वादितां कृत्वा मदिराम् ।

३. कुसुमिके ! गृहाण गृहाण भाजनानि ।

४. वत्स मुग्दरक ! अहं त्वमपि तावद् गच्छावः, यावत्कुसुमिका भाजनानि प्रक्षाल्य आनयति ।

५. अम्ब ! किं पुनरन्यतः कुतोऽपि चलितासि ।

६. मुद्गरक ! न श्रुतं त्वया अद्य आत्मनो गृहवृत्तान्तम् । तत्खलु चिरकालसञ्चितसर्वस्वमद्य चौरैः मुषितम् । तदुद्यानमठवासिनं केवलीज्ञाननिपुणं भगवन्तं ज्ञानराशिं प्रष्टुं गमिष्यामि ।

जाणंताण समक्खं णाअरलोआण मुसइ सव्वस्सं ।
हेलाए अम्ह अत्ता कह चोरो अत्तिआसरिसो ॥८॥[1]

कपट०—मोग्गरअ ! सव्वस्स पणासे को एस वक्कक्खरकालो । पदिआरो दाव कीरदु ।[2]

मुद्गरकः—पदिआरं करेमि । (आकाशे लक्ष्यं वद्ध्वा) हंहो लोअवाला ण भविस्सध! ण भविस्सध जं अत्ताए धम्मपराए परिमुसिदं वत्थु उपेक्खध ।[3]

कपट०—चेडा चेडा ! किं असंबद्धं मन्तेसि ?[4]

चेटः—संबद्धं मन्तेमि ! दिट्ठिआ एसा माआवंचिदसअलभुअणा अत्ता चोरेहिं परिमुसिदा ।[5]

कपट०—(सक्रोधम्) मोग्गरअ । ण संवरसि अतणो मिच्चुदुआरं मुहं ।[6] (इति चपेटेन ताडयति)

---

१. जीवत रे चौरका जीवत ! शुभपरिणामो भवतु युष्माकमेष व्यापारः। न खलु एषा हताशा मुहूर्तमात्रमपि उपरमति अस्मादृशः गृहजनस्य अनर्थपरम्पराः प्रस्तावयन्ती । हा धिक् हा धिक्, अम्ब ! किमेतत् संवृत्तम । न तथा मां बाधते अर्थनाशो यथा आर्याऽपि मुषिता इति पराभवः। न खलु अग्निः केनापि दग्धः श्रूयते । अथवा दैवाधीना धनहानिः। नास्ति पराभवः । तथा च—

जानतां समक्षं नागरलोकानां मुष्णाति सर्वस्वम् ।
हेलया अस्माकमम्बा कथय चौरः अम्बासदृशः ॥

२ मुद्गरक ! सर्वस्य प्रणाशे क एष वक्राक्षरकालः। प्रतीकारः क्रियताम्।

३. प्रतिकारं करोमि । हंहो लोकपाला न भविष्यत न भविष्यत यदम्बाया धर्मपराया वस्तु परिमुषितमुपेक्षध्वम् ।

४. चेट चेट ! किमसंबद्धं मन्त्रयसि ?

५. संबद्धं मन्त्रयामि । दिष्ट्या एषा मायावञ्चितसकलभुवना अम्बा चौरैः परिमुषिता ।

६. मुद्गरक ! न संवरसि आत्मनो मृत्युद्वारं मुखम् ।

चेटः—(सवैलक्ष्यमपसृत्य) अत्ता संबद्धे असंबद्धे वि कुप्पसि । ण तए सह गमिस्सं ।[1]

कपट०—(सानुकम्पमिव) मोग्गरअ ! मोग्गरअ ! एहि एहि दाव पाविदे सव्वस्से भूयिट्ठं मइराभहूसवो माणइदव्वो ।[2] (इति हस्ते गृहीत्वा परिक्रामति)

चेटः—(समन्तादवलोक्य) अहो वसन्तावआरमंडिदस्य ससिरीअत्तणं उज्जाणस्स । अत्ता ! पेच्छध पेच्छध ।

मत्तो भुअंगोव्व समक्खमेसो जं छप्पओ चुंबइ एक्कमेक्कं ।
तेणव्व एदाओ हसन्ति वल्लीविलासिणीओ कुसुमुक्करेहिं ॥९॥

अवि अ—

मताओ रोलंबविलासिणीओ गाअन्ति गेअं मअरद्धअस्स ।
तं चेअ चित्ताणिलचालिदाओ णच्चन्ति वल्लीओ लअक्कमेण ॥१०॥[3]

कपट०—(निःश्वस्य) मुग्गरअ ! ण मे दुक्खत्तहिअआए पडिहाइ वसन्तो ।[4]

चेटः—ण केवलं तुज्झ, (अंगुल्या निर्दिशन्) एदाए वि ।

---

१. अम्ब ! सम्बद्धे असम्बद्धेऽपि कुप्यसि । न त्वया सह गमिष्यामि ।

२. मुद्गरक ! मुद्गरक ! एहि एहि तावत्प्रापिते सर्वस्वे भूयिष्ठं मदिरामहोत्सवो मानयितव्यः ।

३. अहो ! वसन्तावतारमण्डितस्य सश्रीकत्वमुद्यानस्य । अम्ब ! प्रेक्षस्व प्रेक्षस्व ।

मत्तो भुजंग इव समक्षमेष यत् षट्पदश्चुम्बति एकमेकम् ।
तेनेव एता हसन्ति बल्लीविलासिन्यः कुसुमोत्करैः ॥९॥

अपि च—मत्ता रोलम्बविलासिन्यः गायन्ति गेयं मकरध्वजस्य ।
तच्चेव चित्रानिलचालिता नृत्यन्ति वल्ल्यः लयक्रमेण ॥१०॥

४. मुद्गरक ! न मे दुःखार्तहृदयाया प्रतिभाति वसन्तः ।

तहा अ—

एसा रोलंबसुण्णदाए तुन्हिक्का कुसुमभूसणुम्मुक्का ।
लक्खिज्जइ कुंदलआ मुसिअव्व वसन्तचोरेण ॥११॥[1]

कपट०—मुग्गरअ ! गच्छ दाव णिरूवेहि इमम्मि मढम्मि किं कुणन्तो सो भअओ चिट्ठदि । अहं उण इहय्येव चिट्ठिस्सं ।[2]

( चेटस्तथा कृत्वोपगम्य )

चेटः—अत्ता ! दुवे केवि इध मुंडिदमुंडा वाआकलहं कुणन्ति । जं एक्को भणदि तं अवरोवि तस्स कए पडिभणदि ।[3]

कपट०—मुग्गरअ ! सोव्व भअवो सिस्स अज्झावअन्तो चिट्ठदि । ता इहय्येव चिट्ठम्ह याव से अज्झअणं समप्पदि ।[4] (इति तथा कुरुतः)

(ततः प्रविशति शिष्यमध्यापयन्भगवान्ज्ञानिराशिः)

ज्ञानराशिः—अयि ! कण्ठगतौ श्लोकौ तवेमौ संवृत्तौ ?

शिष्यः—णाणरासे ! उअरगदाविमे संवुत्ता ।[5]

ज्ञानराशिः—(सक्रोधम्) मूर्ख ! नामग्रहणेन मां व्याहरसि ।

---

१. न केवलं तव, अस्या अपि । तथा च—

एषा रोलम्बशून्यतया तूष्णीका कुसुमभूषणोन्मुक्ता ।
लक्ष्यते कुन्दलता मुषितेव वसन्तचौरेण ॥

२. मुद्गरक ! गच्छ तावन्निरूपय अस्मिन्मठे किं कुर्वन् स भगवान् तिष्ठति । अहं पुनरिहैव स्थास्ये ।

३. अम्ब ! द्वौ कावपि अत्र मुण्डितमुण्डौ वाचाकलहं कुर्वतः । यदेको भणति तदपरोऽपि तस्य कृते प्रतिभणति ।

४. मुद्गरक ! स एव भगवान् शिष्यमध्यापयन् तिष्ठति । तदिहैव तिष्ठावः यावत्सोऽध्ययनं समर्पयति ।

५. ज्ञानराशे ! उदरगताविमौ संवृत्तौ ।

शिष्यः—किं तुह नामग्गेहणेण पावं भोदि[1] ?

ज्ञान०—धिङ् मूर्ख ! न गृह्यते गुरूणां नाम ।

शिष्यः—ता कधं सेलाणं णाम गेन्हइ ।[2]

ज्ञान०—विद्यादानादिना गुरवो नतु प्रथीयांसः । उपाध्यायपादा इत्येवाहं त्वया व्याहार्यः ।

शिष्यः—उअज्झाअ ! उअरगदाविमे संवुत्ता ते दुवेवि सिलोआ । सुणादु भव ।[3]

आलोक्य सर्वगात्राणि विचार्य च पुनः पुनः ।
इदमोकं तु निष्पन्नं ध्येयो नारीजनः सदा ॥१२॥

ज्ञान०—(सक्रोधम्) धिङ् मूर्ख ! वर्णविपर्ययेण विप्लावितवानसि ।

शिष्यः—उअज्झाअ ! कीस कुप्पसि । जारिसो तए पण्डुरवण्णो सिलोओ लिहिदो तारिसो मए पढिदो ।[4] (वृषीतलं दर्शयति)

ज्ञान०—(विहस्य) मूर्ख ! अक्षराण्यथात्वं कृतं, तत्तावद्द्वितीयं पठ ।

शिष्यः—नमस्ते पाण्डुरैकाक्ष ! नमस्ते विश्वतापन !
नमस्तेऽस्तु मृषाक्रोश महापुरुषकूर्च्चक ! ॥१३॥

ज्ञान०—(सक्रोधम्) आः क्षुद्र ! पुष्पपाण्डुराक्षं मामुपहससि ! (इति हन्तुमुपक्रमते)

शिष्यः—(ससम्भ्रममुपसृत्य) कीस मं ताडेसि ? एदे खु हआसा उअज्झाआ ण सहन्ति अत्तणो समहिअमेहाविसेसं सीसं । ता गमिस्सं दाव ।[5]

---

१. किं तव नामग्रहणेन पापं भवति ?

२. तत्कथं शैलानां नाम गृह्यते ?

३. उपाध्याय ! उदरगताविमौ संवृत्तौ तौ द्वावपि श्लोकौ । शृणोतु भवान्—

४. उपाध्याय ! किं कुप्यसि ? यादृशस्त्वया पाण्डुरवर्णः श्लोको लिखितस्तादृशो मया पठितः ।

५. किं मां ताडयसि ? एते खलु हताशा उपाध्याया न सहन्ते आत्मनः समधिकमेधाविशेषं शिष्यम् । तद्गमिष्यामि तावत् ।

ज्ञान०—(स्वगतम्) मर्मज्ञोऽयम् । संग्रह एवास्य श्रेयान् । (प्रकाशम्) वत्स कौण्डिन्य ! एह्येहि ।

शिष्यः—(सोद्वेगम्) ण आगमिस्सं । चंडसीलो खु तुमं ।[1]

ज्ञान०—कौण्डिन्य ! अलमुद्वेगेनास्मच्चण्डशीलतायाः । पश्य—

नृपतिरखिललोकान्पालयत्यात्तदण्डः
सुखयति जगदर्कः स्वीकृतोष्णस्वरूपः ।
गुरुरपि कटुचेष्टः शास्ति शास्त्राणि शिष्यं
परिणतिहितभाजां भंगिरेवंविधैव ॥१४॥

तदेहि पुनस्त्वां शुद्धमध्यापयामि । (इति समाश्वास्य पाठयति)

आलोक्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं तु निष्पन्नं ध्येयो नारायणः सदा ॥१५॥
नमस्ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन !
नमस्तेऽस्तु हृषीकेश ! महापुरुषपूर्वज ! ॥१६॥

(शिष्यस्तथैव पठति)

ज्ञान०—(सक्रोधम्) मूर्ख ! एवं पठ ।

शिष्यः—(पुनरशुद्धं पठति सनिर्वेदम्) उअज्झाअ ! सुट्ठु कटुअक्खरं तुह एदं अज्झअणं । ण अ एदिणा किंपि पावीअदि । ता मं केवलीविज्जं अज्झावेसु, जहा मे जणस्य घणाइं साहीणाइं होन्ति ।[2]

ज्ञान०—(सजुगुप्सम्) मूर्ख ! धिक् त्वां धिक् त्वाम् । भोगाकांक्षया बाध्यसे । अहो मोहः !

मृगः पाशान्प्रायः परिहरति यत्नेन मृगयोः
प्रमादाद् व्यानद्धो भवति सहसा शोकविकलः ।
अये मुग्धो लोकः प्रकृतिविषमान्हन्त विषया-
न्स्वयं कण्ठे पाशान्घटयतितरां हृष्यतितराम् ॥१७॥

---

१. न आगमिष्यामि । चण्डशीलः खलु त्वम् ।

२. उपाध्याय ! सुष्ठु कट्वक्षरं तवैतदध्यापनम् । न च एतेन किमपि प्राप्यते । तन्मां केवलीविद्यामध्यापय, यथा मे जनस्य धनानि स्वाधीनानि भवन्ति ।

शिष्यः—अलहन्तो एवं मन्तेसि। ण अ तुमं जाणासि केवलीविज्जां।[1]

ज्ञान०—मूर्ख! अहमेव केवलीं जाने किन्तु न शुभावहेत्यवधीरिता। तथाहि—

दिव्ये शुद्धिकृता व्यलीककथनाच्चौरेण तातो हतो
भ्राता मे विननाश कालफणिना दष्टो निधानं खनन्।
युद्धज्ञानविपर्ययान्नृपतिना हन्तुं समाकांक्षितो
जातोऽहं भगवानियं कुलरिपुर्विद्या हि नः केवली ॥१८॥

शिष्यः—( विहस्य ) जाणिदं दाव तिपौरुसं तुम्हाणं णाणमाहप्पं। ता जाणावेसु मं तं अत्तणो संबलभूदं रहस्सं।[2]

ज्ञान०—(सस्मितम्) मूर्ख! मुखरोऽसि। नार्हसि केवलीशिष्यत्वम्।

शिष्यः—(साकूतं विहस्य) उअज्झाअ! किं किं मुहरत्तणेण मए तुह पआसिदं।[3]

ज्ञान०—कौण्डिन्य! त्वमस्माकमात्मैवासि। तदाकर्णय केवलीविदां प्रथमाचारम्—

किं वाग्भिर्निकषो हि नः फलमिति स्याद्गूढगर्वग्रहः
प्रश्नेष्वाविलमुत्तरं विरचयेन्न व्याहरेन्निर्णयम्।
सिद्धं कार्यमवेक्ष्य निश्चितमिदं पूर्वं मयासीदिति
स्फारं स्फारमुदीरयेदुपचरेत्कञ्चिन्मृषा साक्षिणम् ॥१९॥

अपि च—

चिन्ताचुम्बितचेतसा न रचितः प्रश्नः प्रशस्तस्त्वया
नूनं सम्यगुपश्रुतिर्न भवता ज्ञाता ग्रहीतुं तदा।
त्वद्दोषेण फले भ्रमोऽयमभवद्विद्या हि नः केवली
कल्पान्तेऽपि न कम्पते जनमिति प्रत्याययेद्वञ्चितम् ॥२०॥

---

१. अलभमानः एवं मन्त्रयसि। न च त्वं जानासि केवलीविद्याम्।

२. ज्ञातं तावत् त्रिपौरुषं युष्माकं ज्ञानमाहात्म्यम्। तज्ज्ञापय मां तदात्मनो सम्बलभूतं रहस्यम्।

३. उपाध्याय! किं किं मुखरत्वेन मया तव प्रकाशितम्।

शिष्यः—उअज्झाअ ! फुडं किंपि भोदि ।[1]

ज्ञान०—(नेपथ्याभिमुखमवलोक्य साशङ्कम्) मूर्ख ! तिष्ठ तिष्ठ एकपुरुषानुचरा महिला काचिदितोऽभिवर्त्तते ।

(ततः प्रविशति कपटकेलिर्मुद्गरकश्च)

मुद्गरकः—अहा ! सुट्ठु खु पाणगोट्ठीजोग्गं ठाणं ।[2]

कपट०—(सक्रोधम्) एहि दाव तुन्हिक्को ।[3]

ज्ञान०—(स्वगतं साशङ्कम्) न खलु श्रुतमेताभ्यामस्मदीयं वचोरहस्यम् । भवतु प्रगल्भामहे तावत् । (प्रकाशम्) कौण्डिन्य !

ब्रह्मेवाहं मरणमथवा जीवितं वेद्मि जन्तोः
स्वामीवाहं परहृतधनं क्ष्मातलादुद्धरामि ।
लोकस्याहं सकलचरितान्यन्तरात्मेव जाने
चौरैर्लुप्तं स्वयमिव धृतं वस्त्वहं प्रापयामि ॥२१॥

कपट०—(श्रुत्वा सहर्षम्) मुग्गरअ ! आअण्णअ आअण्णअ भअवदो वअणामयं । एहि तुरिदम् ।[4] (इत्युपसर्पतः)

कपट०—भअवं ! पणमामि ।[5]

मुद्गरकः—अहंपि पणमामि ।[6]

ज्ञान०—उभयोर्भद्रमस्तु । आस्येताम् ।

(उभावुपविशतः)

कपट०—(सप्रश्रयम्) भअवं ! अज्ज मे रअणीए मुसिदं सव्वस्सं अप्पावेदु भवं ।

---

१. उपाध्याय ! स्फुटं किमपि भवति ।

२. अम्ब ! सुष्ठु खलु पानगोष्ठीयोग्यं स्थानम् ।

३. एहि तावत्तूष्णीकः ।

४. मुद्गरक ! मुद्गरक ! आकर्ण्य आकर्ण्य भगवतो वचनामृतम् । एहि त्वरितम् ।

५. भगवन् ! प्रणमामि ।

६. अहमपि प्रणमामि ।

७: भगवन् ! अद्य मे रजन्यां मुषितं सर्वस्वमर्पयतु भवान् ।

शिष्यः—(ससम्भ्रमम्) आह ! किं मन्तीअदि । अज्ज रअणीए मढं मोत्तूण ण कहिंपि गदो उअज्झाओ ।[1]

कपट०—(कर्णौ पिधाय ससम्भ्रमम्) सन्तं पावं । णाणसत्तीए चोरं मुणिऊण अप्पावेदुत्ति मए मंतिदं ।[2]

ज्ञान०—(सस्मितम) कौण्डिन्य ! तिष्ठ तिष्ठ । (कपटकेलिं प्रति) भद्र ! अनुचितेयमस्माकमेवंविधा विद्या ।

कपट०—(सप्रश्रयम्) भअवं करुणारससाअरे तुम्हे मोत्तूण को अन्नो अम्हारिसस्स अत्थीअणस्स सरणं । पत्तो अ सो अत्थसंचओ तुम्हाणं य्येव साहीणो भविस्सदि ।[3]

ज्ञान०—( स्वगतं सहर्षम् ) स्वीकृतस्तावदस्माकमनया मनोरथः । तथापि निरीहतामेवाभिनयामि—

न जानामि न गृह्णामि मम किं चिन्तयाऽनया ।
अनङ्गीकार एवाऽयं दाम्भिकानां महाफलः ॥२२॥

(प्रकाशम्) कल्याणि ! त्वदभीष्टेनैव कृतकृत्या वयम् । कौण्डिन्य ! अर्पय केवलीपुस्तकं, करोमि लाभालाभविनिश्चयम् ।

शिष्यः—(पुस्तकमुपनीय) कीरदु दाव केवलीपुत्थअपूआ ।[4]

मुद्गरकः—(सहसोत्थाय) आणेमि कुसुमाइं ।[5]

शिष्यः—भद्द ! सुवण्णेहिं रअणेहिं वा केवलीपुत्थअपूआ भोदि ।[6]

---

१. आः ! किं मन्त्रयते । अद्यरजन्यां मठं मुक्त्वा न कुत्रापि गत उपाध्यायः ।

२. शान्तं पापम् । ज्ञानशक्त्या चोरं ज्ञात्वा आर्पयतु इति मया मन्त्रितम् ।

३. भगवन् ! करुणारससागरान् युष्मान्मुक्त्वा कोऽन्यः अस्मादृशस्य अर्थिजनस्य शरणम् । प्राप्तश्च सोऽर्थसञ्चयः युष्माकमेव स्वाधीनो भविष्यति ।

४. क्रियतां तावत्केवलीपुस्तकपूजा ।

५. आनयामि कुसुमानि ।

६. भद्र ! सुवर्णै रत्नैर्वा केवलीपुस्तकपूजा भवति ।

(कपटकेलिः ज्ञानराशेर्मुखमीक्षते)

ज्ञान०—(स्वगतं सपरितोषम्) अर्हति केवलीरहस्यशिष्यत्वं कौण्डिन्यः। (प्रकाशम्) भद्रे ! एवमेवैतत्।

श्रद्धालुरात्मनः कुर्याल्लाभाल्लाभनिरूपणम्।
अभ्यर्च्य स्वर्णरत्नाभां केवलीं मनुरब्रवीत् ॥२३॥

अभावे कुसुमानि भवन्तु।

कपट०—अय्य ! मुक्खपक्खो य्येव कीरदु।[1] (इत्यंगुलीयकेन पुस्तकं पूजयति)।

ज्ञान०—कौण्डिन्य ! गृहाण। दास्यसि विभज्य भिक्षुभ्यः।

शिष्यः—(स्वगतम्) हआस ! जाणेमि तुमं। अहरेहिं भणसि, ण हिअएण। (प्रकाशम्) जं उअज्झाओ आणवेदि।[2] (इत्यंगुलीयकं गृह्णाति)

ज्ञान०—(पुस्तकमुद्घाट्य) अये ! ग्रहकुण्डलीं तावदालिखामि। (लिखनाभिनयं कृत्वा)।

यदि पश्यति रविसूनुर्विंशस्थानस्थितं व्यतीपातम्।
यदि राहुः शकटभेदी स भवति केतुश्च मेषस्थः ॥२४॥
रविरङ्गारकलग्ने भवति यदा पापवीक्ष्यमाणश्च।
अर्थशरीराभावं प्रश्ने ब्रूयात्तदा नियतम् ॥२५॥

न चायमिह योगः। तदस्ति तावल्लाभो नष्टस्य वस्तुनः।

कपट०—(सहर्षम्) अय्यस्स पसाएण।

---

१. आर्य ! मुख्यपक्ष एव क्रियताम्।

२. हताश ! जानामि त्वामधरैर्भणसि न हृदयेन। यदुपाध्याय आज्ञापयति।

३. आर्यस्य प्रसादेन।

मुद्गरकः—(उच्चैर्विहस्य सहर्षम्) साहु अय्येण जाणिदं । सइं य्येव एसा मुसदि अम्ह घरं ।[1]

(कपटकेलिः सस्मितं कटाक्षेण वारयति)

ज्ञान०—( विभाव्य स्वगतं सवैलक्ष्यम् ) अनेनान्योन्यहासानुभावेन इयमेव कपटकेलिरिति निश्चीयते । तन्न भद्रमापतितम् । (विमृश्य स्मृतिमभिनीय) एतस्याः किल सुता गणिका मदनसुन्दरी कलाकरण्डकैकाग्रहृदया । ताविमौ तद्भृत्यौ चौर्यद्यूतकारिणौ कोकिलपारावतौ । तदेवं तावत् (प्रकाशं कपटकेलिमाहूयापवार्य) भद्रे ! निश्चितश्चोरस्त्वन्नामधेयं च संवरणार्थमुदाहृतम् । प्रयातु भवनं भवती । सुनिभृतमेव याचनीयौ कोकिलपारावतौ ।

कपट०—(प्रकाशं सहर्षम्) अणुमण्णदु मं अय्यो ।[2]

ज्ञान०—भद्रे ! साधयतु भवती । यतश्च वस्तु लब्धव्यं, न तस्मै रोषायितव्यं ।

(कपटकेलिमुद्गरकेण सह निष्क्रान्ता)

शिष्यः—(अंगुलीयकमुपनीय) अलंकरेदु अज्जो एदिणा अत्ताणयं ।[3]

ज्ञान०—(सोद्वेगमिव) कौण्डिन्य ! कस्तवायं मोहः । पश्य रे पश्य—

जरामृत्युव्याधिव्यसनघटनैकाग्रहृदयो
विपर्यासं यस्याः प्रगुणयति कालः प्रतिकलम् ।
तनौ तस्यामस्यामलमलमलङ्कारघटनं
ज्वलद्वह्नौ गेहे रचयति चतुष्कानि कतमः ॥२६॥

शिष्यः—( विहस्य ) उअज्झाअ ! तुहय्येव अहं सिस्सो । किं मं पच्चाएसि । गेन्ह दाव ।[4]

---

१. साधु आर्येण ज्ञातम् । स्वयमेव एषा मुष्णाति अस्माकं गृहम् ।

२. अनुमन्यतां मामार्यः ।

३. अलङ्करोतु आर्यः एतेनात्मानम् ।

४. उपाध्याय ! तवैवाहं शिष्यः । किं मां प्रत्यायसि । गृहाण तावत् ।

(ज्ञानराशिरङ्गुलीयकं परिदधाति)

शिष्यः—(साकूतं विहस्य अञ्जलिं बद्ध्वा) भअवं अंगुलीय ! णमो दे। थिरो होहि इहय्येव उअज्झाअहत्थम्मि ।[1]

ज्ञान०—(सक्रोधमिव) आः पाप ! असत्प्रलापवाचाल ! विस्मृतान्येव मे व्यसनानि। ( स्मृतिमभिनीय सचमत्कारम् ) कौण्डिन्य ! स्मारितोऽस्मि त्वद्वचनेन कलाकरण्डकद्यूतकारप्रार्थनाम् । स हि द्यूते विध्वस्तसर्वस्वो मदीयमन्त्रप्रभावाद्विजयमाकाङ्क्षति । अस्ति तस्यास्मासु बहुधा प्रत्ययः। तदेहि मन्त्रजपयोग्यं विजनं प्रदेशमाश्रयावः । दुर्वारगणिकादिप्रचारमिद-मुद्यानम् ।

शिष्यः—ता इदो इदो एदु उअज्झाओ ।[2]

(इति निष्क्रान्तौ)

इति प्रथमोऽङ्कः।

---

१. भगवन् अंगुलीय ! नमः ते ! स्थिरो भव इहैव उपाध्यायहस्ते ।

२. तदित इत एतु उपाध्यायः ।

## द्वितीयोऽङ्कः

(ततः प्रविशति मन्त्रजपपरायणो ज्ञानराशिः शिष्यश्च)

शिष्य :—उअज्झाअ ! बहुलो तए कदो मंतजाओ । जाणे जिदं य्येव कलाकरंडअजूदअरेण । ण हु दे विलंबिदपहाओ मन्तो । ता एहि उज्झाणं य्येव गच्छम्ह । डज्झन्ति मे मज्झन्हचंडेण चंडंसुतेएण अंगाइं ।[1]

ज्ञान०—(जपं विहाय) एवमेवैतत् ।

मैहिरोऽयं महःपूरः क्रूरः खल इवोत्कटः ।
प्रतिकर्त्तुं परं शक्यः सुस्निग्धैः शाखिसज्जनैः ॥१॥

तदेहि गच्छावः । (इति निष्क्रामतः) ।

शिष्यः—एदं उज्जाणं । पविसदु भवं । (प्रवेशं नाटयतः । कतिचित्पदानि दत्वाऽग्रतोऽवलोक्य) उअज्झाअ ! पेच्छ पेच्छ । इध माधवीमंडवे अब्भुदा कावि इत्थिआ उअज्झा अव्व झाणपराअणा चिट्ठदि । अवरावि एदाए पासम्मि देवआपूअत्थं चन्दणकुसुमाइं उव्वहन्ती चिट्ठदि ।[2]

---

१. उपाध्याय ! बहुलस्त्वया कृतो मन्त्रजापः । जाने जितमेव कलाकरण्डकद्यूतकरेण । न खलु ते विलम्बितप्रभावो मन्त्रः । तदेहि उद्यानमेव गच्छावः । दह्यन्ति मे मध्याह्नचण्डेन चण्डांशुतेजसा अङ्गानि ।

२. एतदुद्यानं प्रविशतु भवान् ।
उपाध्याय ! प्रेक्षस्व प्रेक्षस्व । अत्र माधवीमण्डपे अद्भुता कापि स्त्री उपाध्याय इव ध्यानपरायणा तिष्ठति । अपराऽपि एतस्या पार्श्वे देवतापूजार्थं च चन्दनकुसुमानि उद्वहन्ती तिष्ठति ।

ज्ञान०—कौण्डिन्य ! तदिहैव रक्ताशोकतले उपविशावः । किं माधवी-मण्डपेन । (इत्युपविशतः)

शिष्यः—( विभाव्य स्वगतं साश्चर्योपहासम् ) अहो ! उअज्झाओ अहो ! उअज्झाओ । सुट्ठु खु एसा इहट्ठिदेण पुलोईअदि ।[1]

(ततः प्रविशति यथानिर्दिष्टा मदनसुन्दरी चेटी च)

ज्ञान०—(विलोक्य स्वगतम्) अहो ! रूपसम्पदस्याः ।

तथाहि—

लावण्यवीचिनिचयैस्तरलायताक्षी
प्रक्षाल्य निष्ठुरविवेकदुरक्षराणि ।
कन्दर्पदैवतमियं सहसोपदेश—
माविष्करोति हृदि संयमिनो ममापि ॥२॥

चेटी—भट्टिणि ! एदं खु तुह अंगपसंगमलहन्तं व्विव पच्चाअइ सिप्पिआसमप्पिदं हरिअंदणं । एसा उण चिरसमागआवि तए असंभाविज्जमाणा उआलंभदिव्व तुमं । परिमलमिलन्तरोलंबणिउरुंबमुहलिदा णोमालिआ । एदं पि करकमलकलिदं वअणपरिउंबणाविलं व णीसहं पिव किलम्मदि तंबोलं । ता को एस वसंतावआरपहरिसावसरम्मि दे हिअअक्खेओ ।[2]

---

१. अहो उपाध्यायः अहो उपाध्यायः । सुष्ठु खलु एषा इहस्थितेन प्रलोक्यते ।

२. भट्टिनि ! एतत्खलु तवांगप्रसंगमलभमानमिव प्रतीयते शुक्तिका-समर्पितं हरिचन्दनम् । एषा पुनश्चिरसमागताऽपि त्वया असम्भाव्य-माना उपालभत इव त्वां परिमलमिलद्रोलम्बनिकुरम्बमुखरिता नवमालिका । एतदपि करकमलकलितं वदनपरिचुम्बनाविलमिव निःस-हमिव क्लाम्यति ताम्बूलम् । तत्क एष वसन्तावतारप्रहर्षावसरे ते हृदयक्षोभः ?

मदनसुन्दरी—(अनाकर्णितकेन दीर्घमुष्णं च निःश्वस्य संस्कृतमाश्रित्य)

भुञ्जानाः सहकारकोरकविषं प्राणन्ति पुष्पन्धयाः
कण्ठः कोकिलयोषितां न भकुहूशब्दाग्निना दह्यते ।
श्रीखण्डानिलकालकूटपवनैर्मूर्च्छन्ति नैता लता
धिङ्मृत्योरसमर्थतां स्मरशरैर्विद्धाऽपि जीवाम्यहम् ॥३॥

ज्ञान०—कौण्डिन्य ! किमस्माकमिह निस्संगानाम् ? तदेहि गच्छावः ।

कौण्डिन्यः—उअज्झाअ ! चिठ्ठ चिठ्ठ । तुह दुरज्झअणदूमिदा सीअला-अन्ति कण्णा एदाणं महुरालावेहिं ।[1]

ज्ञान०—(स्वगतम्) ममापि । (प्रकाशम्) कौण्डिन्य ! चित्रकरवेश्या-लापलालसो यदध्ययनादुद्विजसे ।

(चेटी भट्टिनीत्यादि पुनः पठति । मदनसुन्दरी तथैव चिन्तां नाटयति)

चेटी—(हस्ते गृहीत्वा) भट्टिणि मअणसुंदरि ! किं उण तुमं अमंगलं वाहरसि, ण पडिच्छसि णेवच्छलच्छिं ? किं एआरिसय्येव कलाकरंडअं पेच्छिहिसि ।[2]

मदन०—(चमत्कृत्य सहर्षम्) सहि ! कहिं सो जूदअरो ।[3]

---

१. उपाध्याय ! तिष्ठ तिष्ठ । तव दुरध्ययनदूनौ शीतलायतः कर्णौ एतयोः मधुरालापैः ।

२. भट्टिनि मदनसुन्दरि ! किं पुनस्त्वमंगलं व्याहरसि ? न प्रतीच्छसि नेपथ्यलक्ष्मीम् । किमेतादृश्येव कलाकरण्डकं प्रेक्षिष्यसे ?

३. सखि ! कुत्र स द्यूतकरः ?

ज्ञान०—मूर्ख ! कपटकेलिधनप्रत्यावृत्तिं बुद्ध्वापि न प्रत्येषि ।

शिष्यः—कवडकेलीए चोरिदत्ति तए पढमंय्येव पच्चाइदोम्हि ।[1]

मदन०—( सौत्सुक्यम् ) ता एहि तहिं य्येव गडुअ पडिवालेम्ह जूद अरं ।[2]

( इत्युत्थाय चेटीं हस्ते गृहीत्वा परिक्रामति )

शिष्यः—मुंच दाव वाआकलहं । पेच्छ पेच्छ गच्छदि एसा ।[3]

ज्ञान०—(विलोक्य स्वगतं सोत्कण्ठं सानुतापम्) कथमपक्रामत्येव !

उन्मुच्य दूरमपयाति यथा यथेयं
छायेव मन्मथतरोस्तरलायताक्षी ।
अंगानि मे प्रसभमेष तथा तथैव
क्रोडीकरोत्यहह ! दुर्विषहः प्रतापः ॥४॥

शिष्यः— उअज्झाअ ! तुमं व दुव्विसहतिव्वतेओ दिणणाहो । ता एहि एदंय्येव माहवीमंडवं पविसम्ह । इहय्येव झाणधारणादिअं भविस्सदि ।[4]

ज्ञान०—(स्वगतं सहर्षोत्कण्ठम्) चिरं जीवतु से वत्सः । कौण्डिन्येन हृद्गतमभिहितम् । (प्रकाशम्) यथा रोचते वत्साय । (उभौ प्रवेशं नाटयतः) ।

( स्वगतं सोत्कण्ठं विभाव्य) अये इयं सा वेदिका मदनसुन्दरीपरि–

---

१. कपटकेल्या चोरितमिति त्वया प्रथममेव प्रत्यायितोऽस्मि ।

२. तदेहि तत्रैव गत्वा प्रतिपालयाम द्यूतकरम् ।

३. मुञ्च तावद्वाचाकलहम् । प्रेक्षस्व प्रेक्षस्व गच्छति एषा ।

४. उपाध्याय ! त्वमिव दुर्विषहतीव्रतेजाः दिननाथः । तदेहि एनमेव माधवीमण्डपं प्रविशावः । इहैव ध्यानधारणादिकं भविष्यति ।

रम्भसम्भाविता। तदेतामधिश्रये तावत्। ( इति विश्रामं नाटयति )

शिष्यः—इह जहिच्छं कुणदु उअज्झाओ झाणधारणादिअं।[1]

शान०—( सान्तस्तापः स्वगतम् ) कुतो ममैतदिदानीम्। तथाहि—

समेधन्ते श्वासाः क्व नु पवनसंरोधनविधे—

र्वचस्तन्नामैव स्पृशति सततं क्वास्ति स जपः।

तया ग्रस्तं चित्तं क्वचिदपि ययौ कैटभरिपु—

र्ददौ दीक्षामन्यां मम कुसुमचापोऽद्य भगवान् ॥५॥

प्रगल्भते च ममायं सर्वाङ्गीणः सन्तापस्तदेनामेव शीतलां वेदिकां विलुण्ठनैः सम्भावयामि। ( इति तथाकरोति )

शिष्यः—( ससम्भ्रमिव ) किं उण उअज्झाओ एवं पलोट्टदि ![2]

शान०—( ससंवरणम् ) वत्स कौण्डिन्य ! बाधन्ते ममांगानि घोरेण ज्वरेण।

शिष्यः—( स्पर्शमभिनीय ) अहो दे दारुणो जरो। णं जाणसिय्येव जरविआरणमन्तं। ता कीस किलिम्मसि ?[3]

शान०—(स्वगतं विमृश्य) अये मदनसुन्दरीविरहज्वरातुरस्य तद्वशीकरण-मन्त्रप्रयोग एव मे शरणम्। मुखरशिष्यराक्षसाघ्रातस्य क्व मे दूत्यादेरभ्युपाय-स्तदेवं तावत्। ( प्रकाशम् ) वत्स कौण्डिन्य ! सम्यगनुस्मारितोऽस्मि। तदानय लिखनोपकरणानि, यथा ज्वरजित्वरं मन्त्रबीजं विरचयामि।

---

१. इह यथेच्छं करोतु उपाध्यायः ध्यानधारणादिकम्।

२. किं पुन उपाध्याय एवं प्रलुठति।

३. अहो ते दारुणो ज्वरः। ननु जानास्येव ज्वरवितारणमन्त्रम्। तत्कथं क्लाम्यसि ?

शिष्यः—( निष्क्रम्य पुनः प्रविश्य ) एदाइं उवअरणाइं । आलिहदु उअज्झाओ ।[1]

ज्ञान०—( भूर्जत्वचमादाय वशीकरणमन्त्रमालिख्य संवृत्य ) वत्स कौण्डिन्य ! चन्दनपङ्कगोलेन बीजवत्कृत्वैनमानय यथा परिधाय विज्वरो भवामि ।

शिष्यः—(लिखितमादाय परिक्रम्य) अये पेच्छामि दाव किं इध आलिहिदत्ति । (उन्मोच्य वाचयित्वा सस्मितम्) अये मन्ताणन्तरं मदनसुन्दरी मे वशीभवत्तिति लिहिदं । ता ण इदं सहिस्सं । अहंपि मअणसुन्दरीसमागमासाए जीविदं धारेमि । ता एवं दाव । ( उन्मृज्य कपटकेलिर्मे वशीभवत्विति समालिख्य तथैव संवृत्य चन्दनपंङ्केन बीजवत्कृत्वा पुनः प्रविश्य ) धारेदु एदं उअज्झाओ ।[2]

(ज्ञानराशिः बीजमादाय नाट्येन परिदधाति)

शिष्यः—( सहर्षाश्चर्यमिव ) कधं मुहुत्तमेतेय्येव जरविमुक्को व्व उअज्झाओ लक्खीअदि ।[3]

ज्ञान०—(स्वगतम्) बहुधानुभूतसद्यस्कफलोऽयं मन्त्रः । प्रत्यासन्नश्चायं विषविषमशीलः शिष्यः । तदेवं तावत् । (प्रकाशम्) वत्स कौण्डिन्य ! कृतो मन्त्रप्रयोगः । तदिदानीं ज्वरविजयिनीं भगवतोऽभ्यर्चनां चिकीर्षामि । तदानीयन्तां विविधवर्णसौरभ्यवैभवानि कुसुमानि ।

---

१. एतानि उपकरणानि । आलिखतु उपाध्यायः ।

२. अये प्रेक्षे तावत्किमत्रालिखितमिति । अये ! मन्त्रानन्तरं मदनसुन्दरी मे वशीभवत्विति लिखितम् । तन्नेदं सहिष्ये । अहमपि मदनसुन्दरीसमागमाशया जीवितं धारयामि । तदेवं तावत् । धारयतु एतदुपाध्यायः ।

३. कथं मुहुर्तमात्र एव ज्वरविमुक्त इव उपाध्यायो लक्ष्यते ।

शिष्यः—जं उअज्झाओ आणवेदि । (इति निष्क्रम्य स्वगतम्) जाणिदो य्येव मये उअज्झाओ ता किं मे कुसुमेहिं । एदं य्येव चलदलतरुसिहरं आरुहिअ णिरूपमि सव्वं ।[1] (इति तथा करोति)

ज्ञान०—(पुरोऽवलोक्य सहर्षम्) अहह ! फलितं मन्त्रप्रभावेन यदियं गृहीतकुसुमताम्बूलादिप्राभृतका कपटकेलिर्मदनसुन्दरीदूत्येऽत्र समागच्छति ।

(ततः प्रविशति यथानिर्दिष्टा कपटकेलिः । कपटकेलिः ज्ञानराशेरग्रतः प्राभृतकमुपनीय साकूतं विहस्य सव्रीडमुपविशति) ।

ज्ञान०—(सगर्वहर्षम्) अयि भद्रे ! अधिगतं तद् वस्तु ?

कपट०—(सोत्कण्ठम्) सुहअ ! तं लद्धं गदं वत्थु । हिअअं उण मह तए हरिदं ता तुमं य्येव मह सरणं ।[2]

ज्ञान०—(स्वगतम्) आः किमेतत् ? किमियं मदिरारसोन्निद्रितस्मरविकारातिशया ? तत्किमत्रोत्तरं भवति ? अभिमतेन तावद्विनियोजयामि । (प्रकाशम्) भद्रे ! अपि कल्याणिनी तव सुता मदनसुन्दरी ?

कपट०—(सेर्ष्यम्) ण हु ण हु सुदा मे, बहिणिआ खु सा । अहं उण तुम्हारिसविलासिजणपसाएण सुहिदा पिहुलत्तणं पत्ता कणिठ्ठा वि अण्णारिसी मुणिज्जामि ।[3]

ज्ञान०—(स्वगतं सोपहासम्) अहो ! धाष्ट्र्यं वृद्धायाः । अथवा युज्यत एवैतत्—

वातोत्फुल्लतया नयन्ति समतां निम्नौ कपोलौ मुहु—
स्तुंगत्वाभिनयं वहन्ति कुचयोर्वक्षःस्थलोल्लासनैः ।
पुत्रीभ्योऽपि कनिष्ठतां प्रकटयन्त्याच्छाद्य केशान् सितां—
स्तारुण्याभिनयग्रहः परिणतौ कोऽप्येष दुर्योषिताम् ॥६॥

---

१. यदुपाध्याय आज्ञापयति । ज्ञात एव मया उपाध्यायः तत्किं मे कुसुमैः । एतदेव चलदलतरुशिखरमारुह्य निरूपयामि सर्वम् ।

२. सुभग ! तल्लब्धं गतं वस्तु, हृदयं पुनर्मम त्वया हृतं, तत्त्वमेव मे शरणम् ।

३. न खलु न खलु सुता मे, भगिनिका खलु सा । अहं पुनस्त्वादृशविलासिजनप्रसादेन सुखिता पृथुलत्वं प्राप्ता कनिष्ठाऽपि अन्यादृशी ज्ञाये ।

कपट०—(सोत्कण्ठम्) सुअह ! मुंचसु कसाअंबरं ! अलंकरेमि हरिअंदणेण अंगाइं ।[1]

ज्ञान०—(स्वगतम्) अहो ! विकारातिशयो वृद्धायाः । अथवा—

सोत्कण्ठं सेवितोऽत्यर्थं तारुण्यसमये पुरा ।
जहाति जरतीः कामो न दाक्षिण्यवशादिव ॥७॥

(प्रकाशम्) विरम विरम ।

विविधरसविलासोल्लासिनिःसीमपङ्क—
प्रचयनियतपातं दूरतस्तं नमामि ।
अहमिह सुखमम्ब ! त्यक्तविभ्रंशशंङ्कः
पथि नियमपराणां नीरसे सञ्चरामि ॥८॥

कपट०—(सोपहासम्) सुहअ ! णाअरोसि जाणसि परिहसिदुं, जं मं अम्बेत्ति वाहरसि । ण उण जाणसि भाअवदाणं रहस्सं । ण सुदो तए स सिलोओ—

भाग्यवान् कुरुते नित्यं यः कन्दर्पनिषेवणम् ।
सुतरां प्रीयते तस्य कन्दर्पजनको हरिः ॥९॥

ण उण अहं जाणे केत्तीआओ भाअवदाणं विसीओ णिअसुरअसत्थरोसीसअम्मि मये दिण्णाओ ।[2]

ज्ञान०—(सक्रोधम्) आः पापे ! पतिष्यसि भागवतदर्शनदूषणपङ्केन ।

---

१. सुभग ! मुञ्च कषायाम्बरम् । अलङ्करोमि हरिचन्दनेनाङ्गानि ।

२. सुभग ! नागरोऽसि जानासि परिहसितुं यन्मामम्बेति व्याहरसि । न पुनस्त्वं जानासि भागवतानां रहस्यम् । न श्रुतस्त्वया स श्लोकः । न पुनरहं जाने कियत्यः भागवतानां विंशत्यो निजसुरतस्रस्तरोच्छीर्षके मया दत्ताः ।

कपट०—(विहस्य) सुहअ ! ण णिवडिस्सं । एसो मे आलम्बणमत्थि तुह दंडो ।[1] (इति दण्डं स्पृशति)

ज्ञान०—आः पातकिनि ! मा स्पृश मा स्पृश । त्वयि यमदण्डोऽयं दण्डः ।

(इति दण्डमाच्छिद्य हन्तुमुपक्रमते)

कपट०—(सत्वरमपसृत्य) रे रे णट्ठभअव ! ण मे एत्थ कोकिलपारावदा तेण मं अणाहं व ताडेसि ।[2]

(ततः प्रविशतः संरब्धौ कोकिलपारावतौ)

पारावतः—कोकिलआ ! कहिंपि इध उज्जाणे सो णट्ठभअवओ पुलोईअदि, जो अम्ह चोरिआकलहमुप्पादेदि ।[3]

ज्ञान०—(पुरोऽवलोक्य सभयम्) अम्ब ! त्वमेवात्र शरणं मे ।

कपट०—(सक्रोधम्) अज्जवि मं अंबित्ति वाहरसि ?[4]

ज्ञान०—(सप्रश्रयम्) सुन्दरि ! करिष्यसि मे प्राणरक्षा, त्वदायत्तोऽहम् ।

कपट०—ता समाहिदंभेण चिट्ठदु भअवं ।

---

१. सुभग ! न निपतिष्यामि । एष मे आलम्बनमस्ति तव दण्डः ।

२. रेरे नष्टभगवन् ! न मे अत्र कोकिलपारावतौ येन मामनाथामिव ताडयसि ।

३. कोकिलक ! कुत्रापि इहोद्याने स नष्टभगवान् प्रलोभयते योऽस्माकं चौरिकाकलहमुत्पादयति ।

४. अद्यापि मामम्बेति व्याहरसि ?

५. तत्समाधिदम्भेन तिष्ठतु भगवान् ।

(ज्ञानराशिः तथा करोति)

कोकिलः—(पुरो निरूप्य सहर्षम्) पारावआ ! पेच्छ पेच्छ एसो सो भवओ पासट्ठिदाए अत्ताए उआसिज्जमाणो चिट्ठदि । ता एहि उअसप्पम्ह ।[1]

उभौ—(उपसृत्य ससंरम्भमुच्चैःकारम्) अत्ते ! किं इध तुमं ?[2]

कपट०—(सनिभृतस्वरं हस्तसंज्ञया वारयन्ती) कोकिलआ ! णिहुअं चिट्ठध । मा भोदु समाहिभंगो भअवदो ।[3]

कोकिलः—अत्ते ! एसो खु मे तिव्वमइरावेअविहलोव्व पडिहाअदि जं णिमीलिअच्छो घुम्मदि । (पारावतं कटाक्षेण वीक्ष्य) तुमं वा कधं मन्नेसि ।[4]

पारावतः—कोकिलआ ! एवं णेदं । ता एहि एसो दीहिआजलम्मि मज्जीअदि ।[5] (इति तथोपक्रमेते)

कपट०—( ससम्भ्रमम् ) आः किं एदं ? चिट्ठध चिट्ठध रे चिट्ठध । मा जलणम्मि झंपध ।[6]

कोकिलः—अत्ते ! जइ एसो जलणो ता किन्न एदं णिच्चं चिअ उच्छंगअन्ती डज्झसि तुमं ।[7] (इति प्रसभं धारयतः)

---

१. पारावत ! प्रेक्षस्व प्रेक्षस्व एष स भगवान् पार्श्वस्थितया अम्बया उपास्यमानस्तिष्ठति । तदेहि उपसर्पावः ।

२. अम्ब ! किमत्र त्वम् ?

३. कोकिलक ! निभृतं तिष्ठत । मा भवतु समाधिभङ्गो भगवतः ।

४. अम्ब ! एष खलु मे मदिरावेगविह्वल इव प्रतिभाति यन्निमीलिताक्षो घूर्णते । त्वं वा कथं मन्यसे ?

५. कोकिलक ! एवं न्विदम् । तदेहि एष दीर्घिकाजले मज्ज्यते ।

६. आः ! किमेतत् ? तिष्ठत तिष्ठत रे तिष्ठत । मा ज्वलने झम्पत ।

७. अम्ब ! यदि एष ज्वलनस्तत्किं नैतं नित्यमेवोत्संगयन्ती दह्यसे त्वम् ?

(ज्ञानराशिः सहुंकारं शिरो वलयति)

पारावतः—कोकिलआ ! पिच्छिलवालो ण एस धरिदुं पारीअदि ।[1]

कोकिलः—पारावआ ! तुमं हत्थेसु अहं पाएसु धारेमि ।[2] (इति तथा कुरुतः)

पारावतः—(बाहुतो बीजं छित्वा हस्ते गृहणन्नङ्गुलीयकं प्रत्यभिज्ञाय) कोकिलआ ! पच्चभिजाणेसु अंगुलीअअं एदं अत्ताए मअणसत्थसिक्खा-दक्खिणाए एअस्स विइण्णं ।[3]

कोकिलः—(सोपहासम्) साहु अत्ते ! साहु । सव्वस्सं एअस्स समप्पेदि । चोरिआकलंकं उण अम्ह मत्थे आरोवेदि । (उभौ चालयतः)

ज्ञान०—(साक्रन्दम्) कौण्डिन्य ! कौण्डिन्य ! क्वासि ? क्वासि ? एष त्वामपहाय वैष्णवं लोकमभिपद्ये ।

कोकिलः—पाआलमूलत्ति भण ।[5]

पारावतः—कोकिलआ ! एसो भअवओ एदस्सिं य्येव पच्चासन्ने विन्हुदेवदे चलदलतरुम्मि अवलंबीअदि । अणुभवदु मुहुत्तं खेअरसिद्धिं ।[6]

---

१. कोकिलक ! पिच्छिलवालो न एष धर्तुं पार्यते ।

२. पारावत ! त्वं हस्तयोः अहं पादयोर्धारयामि ।

३. कोकिलक ! प्रत्यभिजानीहि अंगुलीयकमेतदम्बया मदनशास्त्रशिक्षा-दक्षिणया एतस्य वितीर्णम् ।

४. साधु अम्ब ! साधु सर्वस्वमेतस्य समर्पयति । चौरिकाकलंकं पुनरस्माकं-मस्तके आरोपयति ।

५. पातालमूले इति भण ।

६. कोकिलक ! एष भगवान् एतस्मिन्नेव प्रत्यासन्ने विष्णुदेवते चलदलतरौ अलम्ब्यते । अनुभवतु मुहूर्तं खेचरसिद्धिम् ।

(कोकिलः ऊर्ध्वं शाखामवलोकते)

कौण्डिन्यः—(स्वगतं सभयम्) एसो सो पलिज्जमाणो डरन्तो अवरंपि पज्जालेदि। ता एवं दाव (प्रकाशम्) जीवध जीवध। धारेध धारेध एदं दंभतापसं याव अहं अवदरामि। एसो खु मे सअलुज्जाणे कुसुमाइं णिच्चंच्चिअ गेन्हइ। अहं इहट्ठिदो णिरूवेमि ण उण पेक्खामि।[1] (इत्यवतरणं नाटयित्वा हन्तुमुपक्रमते)।

ज्ञान०—अहो गुरौ भक्त्यतिशयः। भवतु। जीवतु तावद्वराकः।

(कपटकेलिः विहस्य ज्ञानाराशेर्मुखमीक्षते)

पारावतः—अरेरे तुमं उज्झाणवालो?[2]

कौण्डिन्यः—अध इं?[3]

कोकिलः—पारावआ! जं अत्ता णिहुअं हसिऊण भअवदो मुहं पेक्खदि ता एसोय्येव सो एदस्स दुदीओ कोंडिण्णो।[4] (इति सहसोपसृत्य तमपि धारयति)

पारावतः—एसो वि एदस्य भअवओ इध ता समअं च्चिअ दोन्हवि भोदु सिद्धी।

(इति योगपट्टाभ्यां द्वयोरपि कण्ठौ सन्दानयतः)

---

१. एष स प्रज्वाल्यमानो बिभ्यत् अपरमपि प्रज्वालयति। तदेवं तावत्। जीवत जीवत। धारयत धारयत एनं दम्भतापसं यावदहमवतरामि। एष खलु मे सकलोद्याने कुसुमानि नित्यमेव गृह्णाति। अहमिह स्थितो निरूपयामि न पुनः प्रेक्षे।

२. अरेरे त्वमुद्यानपालः?

३. अथ किम्?

४. पारावत! यदम्बा निभृतं हसित्वा भगवतो मुखं प्रेक्षते, तदेष एव स एतस्य द्वितीयः कौण्डिन्यः।

५. एषोऽपि एतस्य भगवतः अत्र तत्सममेव कृत्वा द्वयोरपि भवतु सिद्धिः।

कौण्डिन्यः—(साक्रन्दं दीर्घं निश्वस्य) णिअणिअट्ठाणेसु चिट्ठन्तु णिहाणाइं। किलिम्मदु दालिद्ददूमिओ लोओ उवरमदि णाणरासी।[1]

कोकिलः (सस्पृहम्) रे रे जाणादि तुह उअज्झाओ णिहाणाइं।[2]

कौण्डिन्यः—को न एत्थ एदिणा कअत्थीकदो।[3]

कोकिलः—(सहसोपसृत्य) भअवं णाणरासे ! अनुगेन्हसु अम्हे।[4]

ज्ञानि०—(स्वगतम्) साधु कौण्डिन्य ! साधु तदेवं तावत् (प्रकाशम्) वत्स ! आर्त्तोऽयं प्रलपति। क्रियतामस्मासु समीहितम्।

(कोकिलपारावतौ योगपट्टौ विहाय पदयोः प्रणिपत्य)

उभौ—पसीददु पसीददु अय्यो। करेसु अम्हे अदलिद्दे।[5]

ज्ञान०—वत्सौ ! क्षान्तं मया। क्षमाधना हि मादृशाः। परोपकार एवास्माकं परमकारुणिकानां परमो धर्मः। अवश्यमनुग्रहीतव्यौ वत्सौ। तदुत्तिष्ठताम्।

उभौ—(उत्थाय) जीवदु जीवदु अज्जो।[6]

---

१. निजनिजस्थानेषु तिष्ठन्तु निधानानि। क्लाम्यतु दारिद्र्यदूनो लोकः उपरमति ज्ञानराशिः

२. रे रे ज्ञानाति तव उपाध्यायो निधानानि ?

३. को नात्र एतेन कृतार्थीकृतः ?

४. भगवन् ज्ञानराशे ! अनुगृहाणास्मान्।

५. प्रसीदतु प्रसीदतु आर्यः। कुरु अस्मानदरिद्रान्।

६. जीवतु जीवतु आर्यः।

ज्ञान०—(सगर्वम्)

मद्भ्रूभंगिसमादिष्टा कुम्भदासीव भरियम्।
निधानकुम्भसम्भारं गेहे कस्य न ढौकयेत् ॥१०॥

कौण्डिन्य ! समानय लांगलीरसम्।

कौण्डिन्यः—किं तेण ?[1]

ज्ञान०—किं न श्रुतं त्वया ?

रसेन लांगलीयेन समन्त्रेणाञ्जितेक्षणः।
निधनं वा निधानं वा धीरः समधिगच्छति ॥११॥

कोकिलः—भअवं ! णिहाणदो किं णिहणं गरुअं ?[2]

ज्ञान०—मात्राहीनमपि सर्वदुःखप्रशमनं निधानान्निधनं श्रेयः।

कोकिलः—ता अम्हाणं तं य्येव भोदु।[3]

ज्ञान०—अथ किं ? त्वरय कौण्डिन्य ! त्वरय।

कौण्डिन्यः—जं आणवेदि भवं ( इति निष्क्रम्य पुनः प्रविश्य ) एदं तं गेन्हदु उअज्झाओ।[4]

ज्ञान०—( आदाय ) कस्याक्ष्णोः प्रथमं दीयताभञ्जनम् ?

कोकिलः—मह दाव।[5]

---

१. किं तेन ?

२. भगवन् ! निधानतः किं निधनं गुरु ?

३. तदस्माकं तदेव भवतु।

४. यदाज्ञपयति भवान्। एतत्तद्गृह्णातु उपाध्यायः।

५. मम तावत्।

पारावतः—( उपसृत्य ) मह दाव ।[1]

कपट०—भअवं ! एसोवि तए अणुअंपणिज्जो इत्थीअणो ।[2]

ज्ञान०—आः ! किमौत्सुक्येन ? सर्वेषामेवासन्नं निधनम् ।

पारा०—तत्कोकिलस्य तावत्कुरु ।

ज्ञान०—( तथा कृत्वा ) वत्स ! एतस्मिन्वृक्षमूले दृशं निधेहि ।

( कोकिलः तथा करोति )

पारा०—कोकिलआ ! पेच्छसि किंपि ?[3]

कोकिलः—ण किम्पि ।[4]

ज्ञान०—(अपवार्य) वत्स पारावत ! सत्येयं जनोक्तिः 'अर्थातुराणां न सुहृन्न बन्धुः' यदयं पश्यन्नपि न कथयति । सर्वत्र पदे पदे निधानानीति किमुन्मत्तजल्पितम् ? तत्तवान्यदेव दर्शयामि ।

(इति पारावताक्षिणी तथा करोति)

कपट०—भअवं ! ममावि ।[5] (ज्ञाराशिस्तथाकरोति)

कोकिलः—( अपवार्य ) पारावआ ! पेच्छिसि किम्पि ?[6]

पारा०—ण किम्पि ।[7]

---

१. मम तावत् ।

२. भगवान् ! एषोऽपि त्वया अनुकम्पनीयः स्त्रीजनः ।

३. कोकिलक ! प्रेक्षसे किमपि ?

४. न किमपि ।

५. भगवन् ! ममापि ।

६. पारावत ! प्रेक्षसे किमपि ?

७. न किमपि ।

कोकिलः—अत्ते ! तुमं पेच्छसि किंपि ।[1]

कपट०—णहि णहि फुट्टन्ति णवरि लोअणा ।[2]

कोकिलः—( अपवार्य ) परावआ ! अत्ता ण पेच्छदि ! तुमं ण पेच्छसि । अहं ण पेच्छामि । ता किं एत्थ काअव्वं । (अपवार्य मन्त्रयित्वा) ता एवं दाव ( प्रकाशम् )। उअज्झाअ ! थोअं खु अंजणं । ता अवरेण रसेण तुमं मह कणिट्ठो उण पारावअस्स अंजदु लोअणे जहा समअंचिअ णिहाणे पेच्छम्ह ।[3] (उभौ तथा कुरुतः । कोकिलपारावतौ गाढं निपीड्योभयोरप्यक्षिणी निजाक्षिभ्यां सान्द्रं विमर्दयतः )

ज्ञानराशिकौण्डिन्यौ—( पीडामभिनीय ) कृष्ण कृष्ण ! स्फुटतो विलोचने ।

कोकिलपरावतौ—हआसा ! गेह्नध गेन्हध णिहणं ।[4]

ज्ञान०—आः कौन्डिन्य ! उपविष्टं किमप्येतदानीतं त्वया ! अन्य एव स नेत्राञ्जनः ।

कौण्डिन्यः—उअज्झाअ ! किं मं मारेदुमिच्छसि ! एवं ज्येव फुट्ट-लोअणो मुदोहं ।[5]

पारा०—( पीडातिशयमभिनीय) हद्धी हद्धी अट्ठाणे मुदोम्हि ।[6]

---

१. अम्ब ! त्वं प्रेक्षसे किमपि ?

२. नहि नहि स्फुटतः नवरं लोचने ।

३. पारावत ! अम्बा न प्रेक्षते । त्वं न प्रेक्षसे । अहं न प्रेक्षे । तत्किमत्र कर्त्तव्यम् ? । तदेवं तावत् । उपाध्याय ! स्तोकं खलु अञ्जनम् । तदपरेण रसेन त्वं मम कनिष्ठस्य पुनः पारावतस्य अञ्जतु लोचने, यथा सममेव निधाने प्रेक्षामहे ।

४. हताशा ! गृह्णीत गृह्णीत निधनम् ।

५. उपाध्याय ! किं मां मारयितुमिच्छसि एवमेव स्फुटितलोचनो मृतोऽहम् ।

६. हा धिक् हा धिक् अस्थाने मृतोऽस्मि ।

कोकिलः—पारावश्रा ! किं सोएसि । तह श्र—

अपीअपुव्वं किसु किंपि मज्जं
विट्टालिदा किं महिला ण कावि ।
जूएण सुण्णो दिअहो गदो किं
को अम्ह सोआवसरो जअम्मि ॥१२॥[1]

ज्ञान०—( स्वगतं सोपहासम् ) सत्यमेतत् ।

कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियामिवातिथिम् ।

(प्रकाशम्) वत्सौ कोकिलपारावतौ ! अस्ति क्वापीह प्रत्यासन्नो जलाशयः । नयनप्रक्षालनमात्रेणैव प्रशाम्यत्येषोऽपमृत्युः ।

कोकिलः—अत्थि एत्थ पच्चासन्नं मअणुज्जाणं, जहिं सामी कलाकरंडओ पाणगोट्ठीविलासं करेदि ।[2]

पारा०—ता कधं मग्गं पुलोअम्ह ।[3]

कोकिलः—एदं दाव रिंगन्ता वि गच्छम्ह ।[4]

( सर्वे शनैः परिक्रामन्ति । कौण्डिन्यः कोकिलोपरि पतनं नाटयति )

कोकिलः—( सक्रोधं चरणेन प्रेर्य ) हआस ! किं इध णिहाणं ? कोइलो खु अहं । ता परदो गच्छ ।

---

१. पारावत ! किं शोचसे ? तथा च ।
अपीतपूर्वं किमु किमपि मद्यं विट्टालिता किं महिला न कापि ।
द्यूतेन शून्यः दिवसो गतः किं कोऽस्माकं शोकावसरः जगति ॥

२. अस्ति अत्र प्रत्यासन्नं मदनोद्यानं, यत्र स्वामी कलाकरंडकः पानगोष्ठीविलासं करोति ।

३. न कथं मार्गं प्रलोकयामः ।

४. एतत्तावद्रिंगन्तावपि गच्छावः

५. हताश ! किमत्र निधानम् ? कोकिलः खल्वहं, तत्परतो गच्छ ।

कपट०—( पतनं नाटयन्ती ) वच्छ कोकिलआ ! अवलंबसु अव- लंबसु मं ।[1]

कोकिलः—अत्ते ! णिअदितव्व चिट्ठ । को तुमं उद्धरिदुं पारेदि । हत्थिपडणं तुह संवुत्तं ।[2]

(कपटकेलिः कथञ्चिदुत्थाय पुनः पुनः पतनं नाटयति)

पारा०—(सोपहासम्) पावेदु दाव अज्जआ पए पए णिहाणाइं ।[3]

कोकिलः—( पीडातिशयं नाटयन् ) हद्धी हद्धी सो णवरि अणुसओ जं ण पाविदो मरणसमअम्मि पाअफंसो पहुणो कलाकरंडअस्स ।[4]

कपट०—(साक्रन्दं सोरस्ताडमाकाशे लक्ष्यं बद्ध्वा) पुत्ति मअणसुंदरि ! कहिंसि कहिंसि ? देहि मे पडिवअणं । एसा खु अणाहा अदिट्ठतुहमुहअंदा विवज्जामि ।[5]

( ततः प्रविशति सपरिवारा सम्भ्रान्ता मदनसुन्दरी कलाकरण्डकश्च)

मदनसुन्दरी—अत्ते ! किं णेदं ?[6]

( कपटकेलिः कण्ठे गृहीत्वा रोदिति )

कलाकरण्डकः—( विलोक्य सम्भ्रममपसृत्य ) भगवन् ज्ञानराशे ! किमेतत् ?

ज्ञान०—(स्वरेण ज्ञात्वा) वत्स ! कलाकरण्डक ! दुर्दैवहतोऽहं किं कथयामि ।

कोकिलपारावतौ—( सक्रोधम्) णाह कलाकरन्डअ ! एदं माआवंचिदसअलभुअणं संभावेसु णट्ठं ।[7]

---

१. वत्स कोकिलक ! अवलम्बस्व अवलम्बस्व माम् ।

२. अम्ब ! निपतितैव तिष्ठ । कस्त्वाम् उद्धर्तुं पारयति ? हस्तिपतनं तव संवृत्तम् ।

३. प्राप्नोतु तावदार्या पदे पदे निधानानि ।

४. हा धिक्, हा धिक्, एष नवरमनुशयो यन्न प्राप्तो मरणसमये पादस्पर्शः प्रभोः कलाकरण्डकस्य ।

५. पुत्र मदनसुन्दरि कुत्रासि ? देहि मे प्रतिवचनम् । एषा खलु अनाथा अदृष्टत्वन्मुखचन्द्रा विपद्ये ।

६. अम्ब ! किन्विदम् ?

७. नाथ कलाकरण्डक ! एनं मायावंचितसकलभुवनं संभावय नष्टम् ।

कलाकरण्डकः—(ससम्भ्रमम्) आः पापौ ! अलमलं चापलेन। (ज्ञानराशिं प्रति ) भगवन् ! कथय किमेतत् ? सज्जोऽयं त्वत्प्रेष्यो जनः।

ज्ञान॰—वत्स ! तावदम्भः समानीय प्रक्षाल्यन्तां सर्वेषामक्षीणि।

कलाकरण्डकः—कुसुमिके ! मुद्गरक ! ननु प्रत्यासन्नैव दीर्घिका, तदानीयतां पानीयम्।

उभौ—जं सामी समादिसदि। ( इति निष्क्रम्य पुनः प्रविश्य ) उवणीदं जलं।[1]

कलाकरण्डकः—प्रक्षाल्यन्तां सर्वेषामक्षीणि। (इति तथाकुरुतः)

ज्ञान॰—( मुखं प्रक्षाल्य उन्मील्य चक्षुषी ) वत्स कलाकरण्डक ! दिष्ट्या दृष्टोऽसि, दिष्ट्या प्रशान्तमापदा।

कपट॰—(सहर्षम्) दिट्ठिआ दिट्ठो मए तुह मुहससी।[2] (इति मदनसुन्दरीं चुम्बति )।

कोकिलपारावतौ—( कलाकरण्डकं पदयोर्गृहीत्वा ) दिष्ट्या जीवतोर्नौ नयनातिथिर्जातोऽसि।

कलाकरण्डकः—वत्सौ ! प्रणम्यतां तावदयं जगद्गुरुर्भगवान्।

( उभौ तथा कुरुतः )

ज्ञान॰—सह कलाकरण्डकेन प्रमोदन्तां प्रमोदन्तां भवन्तः सर्वेऽपि। वत्स कलाकरण्डक ! न कश्चिदिहापराध्यति। अनयोर्निधानदर्शनोत्सुकयोरर्थे यन्नयनाञ्जनं समानीतं तद्व्यत्ययेनान्यदेव तीव्रं किमपि संवृत्तम्।

कलाकरण्डकः—(सप्रश्रयम्) किमुच्यते ? न खलु प्रमादतोऽपि परिभवन्ति विपदो जगद्गुरुम्।

ज्ञान॰—वत्स कलाकरण्डक ! अपि निर्जिता द्यूतकाराः। पूर्णास्ते मनोरथाः।

---

१. यत्स्वामी समादिशति। उपनीतं जलम्।

२. दिष्ट्या दृष्टो मया तव मुखशशी।

कलाकरण्डकः—( सहर्षं सप्रश्रयम् ) भगवन् ! किमुच्यते ? नास्त्य-साध्यं किमपि मे भुवने भवदनुकम्पासनाथस्य ।

मुदगरकः—(सहर्षोत्सुक्यम्) णाह कलाकरण्डअ ! एसा दे अम्बा एस दे गुरू एस दे परिअणो जं णिरावदो जाओ, ता एध महूसवं माणेम्ह ।[1]

ज्ञान०—वत्स ! कलाकरण्डक ! ब्रूहि किं ते भूयः प्रियमुपकरोमि ?

कलाकरण्डकः—(सहर्षं सप्रश्रयम्)

अजय्यास्ते द्यूते सकलकितवाः किन्न विजिताः
प्रिया प्राणप्राया किमु न घटिता चन्द्रवदना ।
विपद्धार्द्धेः पारं किमु मम न यातः परिजनः
कृतार्थं कृत्वा मां किमसि भगवन् ! दित्सुरपरम् ॥१३॥

तथापीदमस्तु—

अवनिमवनिपालाः पालयन्तु प्रकामं
विदधतु शुभवृष्टिं दत्तमोदाः पयोदाः ।
भवतु भवतु लोकः शोकवैदेशिकात्मा
रजनिरमणलेखाशेखरध्यानधन्यः ॥१४॥

कृतिरियं महाराजश्रीपरमर्द्दिदेवस्यामात्यस्य
महाकवेः श्रीवत्सराजस्य ।

हास्यचूडामणिनामकं प्रहसनं समाप्तम् ।



---

१. नाथ कलाकरण्डक ! एषा ते अम्बा, एष ते गुरुः, एष ते परिजनो, यन्निरापदो जाताः, तदेतद् महोत्सवं मानयामः ।

# आस्माकीनम्

## संस्कृत-नाट्यसमारोहाः

प्रसिद्धमेवैतदाभाणकं काव्येषु नाटकं रम्यमिति। तत्र ललितसाहित्य-प्रणयने भासस्य नाट्यरचना कालिदास प्रवरसेनाश्वघोषादीनां काव्यकृति-भ्योऽथवा गुणाढ्यस्य कथाकृतिभ्यः पूर्वमेव स्वास्तित्वं समुपाजगाम। नाट्य-शास्त्रस्य व्यापकत्वादेव हेतोराचार्यभरतेन स्पष्टमुदघोषि—'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला। नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते॥' ततो भरतस्य नाट्यरसदर्शनमेवादाय काव्यशास्त्रिभिः काव्ये रस-सिद्धान्तो व्यतन्यत। नाट्यम्प्रति गाढाभिरुचेस्तस्य सूक्ष्मचिन्तनस्य च प्रमाण-मिदमेव यत् पूर्वकाले प्रत्येकनाटकस्याभिनयः कस्यचिद्राज्ञः संरक्षणे सुव्यवस्थित-विधिना कारितः। नाटककारेण स्वरचनायां तस्य नामाप्युदलेखि।

उक्ततथ्यैरिदमवगम्यते यदस्माकं देशे संस्कृतनाट्यस्य प्रणयनादधिकं महत्त्वमभिनयस्यासीत्। अभिनयसम्बन्धे कवीनां स्वीया दृष्टिः स्वीया रीति-स्तथा काश्चन विशिष्टा मान्यता आसन्। तस्याभिनयस्य तुलना अद्यतन-हिन्दीरङ्गमञ्चेन सह कर्तुमशक्या, यतो हि हिन्दीरङ्गमञ्चः संस्कृतापेक्षया पाश्चात्यरङ्गमञ्चेनाधिकं प्रभावितो लक्ष्यते। अद्यत्वेऽभिनयस्योपकरणानां भूयः मौविध्यमस्माभिर्लभ्यते। परन्तु न खलूपकरणानि अभिनयस्य प्राण-प्रतिष्ठा वर्तन्ते, संस्कृतनाटकानां सूक्ष्मानुशीलनादिदमवगम्यते।

प्रसन्नताया विषय एष यत्स्वातन्त्र्योत्तरभारते संस्कृतानुरागिभिः संस्कृत-नाटकानामभिनयम्प्रति रुचिः प्रादर्शि । प्रत्यब्दम् उज्जयिन्यां कालिदास-जयन्तीसमारोहे कालिदासस्य नाटकानामभिनयस्तु भवत्येव, देशस्य अन्य-संस्था विश्वविद्यालयानां संस्कृतविभागाश्च संस्कृतनाटकानामभिनयस्य कार्य-क्रमं सम्पादयन्ति । प्रयागनगरेऽपि प्रतिवर्षं संस्कृतस्य एकं-द्विकं नाटकमभि-नीयत एव । अस्मिन् क्षेत्रे वयमुन्मुखा जाता इत्यपि नाल्पप्रमोदावहम् ।

किन्तु न वयं विश्वस्तं कथयितुं शक्नुमो यत् संस्कृतनाटकानां योऽभिनयो देशस्य विभिन्नभागेषु क्रियते तत्र नाट्याचार्यभरतधनञ्जयाभिनवगुप्तानामथवा कालिदासादीनां नाट्यकाराणां कियान् दायभागो वर्तते । किं संस्कृतनाट्य-शास्त्रस्याथवा संस्कृतनाटकानामेष्वभिनयेष्वात्मप्रतिष्ठा भवति ? ऐषमः प्रयाग-नगरे ययोः संस्कृतनाटकयोरभिनयो जातस्तयोर्दर्शनान्नैराश्यमेवानुभूतम् । धर्मज्ञानोपदेशसंस्कृतविद्यालयच्छात्रैर्वेणीसंहारनाटकमभिनीतम् । तत्र सौविध्य-मभिलक्ष्य हेयोपादेयनीतिरनुसृता । द्वितीयं नाटकं वङ्गप्रान्तस्य डा० रमा-चौधुरीमहाभागायाः 'मेघनेदुरमेदिनीयम्' आसीत् । यस्याभिनयो लेखिकाया एव निर्देशने कालिदास अकादमी-तत्त्वावधाने सम्पन्नोऽभवत् ।

उभयोर्नाटकयोरभिनयं दृष्ट्वाऽस्माकं मनसि संशय उत्थितो यद् भरतस्य रसनिष्पत्तिमादाय भट्टनायकाभिनवगुप्ताभ्यां या व्याख्याः प्रस्तुतास्ताः किम-भिनयप्रयोगस्य निष्कलितसिद्धान्ता आहोस्वित् कल्पनाविस्तारमात्रम् ?

अभिनवगुप्तस्य सिद्धान्ते वर्तते यन्नाट्यरसाभिव्यक्तिर्देशकालाद्यनालिङ्गिता भवति । अस्माकं संस्कृतनाटकानामिदानीन्तनाभिनयाः सर्वथा हिन्दीरङ्गमञ्चेन प्रभाविता विद्यन्ते, यद्यपि तेषामुत्तरदायित्वं संस्कृतनाट्याभिनयभूमिकाप्रस्तुती-

करणं वर्तते। उक्तनाटकयोर्द्वयोरभिनयोऽस्मानभिनवगुप्तसिद्धान्तविरुद्धं देश-कालाद्यालिङ्गितानेव करोति। वेणीसंहारस्याभिनये नाटकस्य संक्षेपः कृतः। किन्तु तत्र प्रवेशकस्य संक्षिप्तीकरणस्य स्थाने विस्तर एव विहितः यस्मिन् राक्षसराक्षस्यौ रक्तमांसभक्षणसम्बन्धे परस्परं वार्तालापं कुरुतः। तत्र च अभिनयप्रयोक्तृभिः टमाटरखण्डं भुङ्क्त्वा प्रत्यक्षमांसभक्षणस्याभिनयं विधाय भरतस्य सिद्धान्तो दूरादुज्झितः। युद्धभूमिमवतरतां भीमाश्वत्थामादीनां वेष-भूषा सा एवासीत् या गीताप्रेस—गोरखपुरात्प्रकाशितस्य महाभारतसंस्करणस्य चित्रेषु वर्तते। किन्तु न सा युद्धाय सज्जा भवति।

ईदृश एव विरोधाभासो मेघमेदुरमेदिनीयस्याभिनये दृष्टः। नाटकमिदं कालिदासीयमेघदूतस्याधारं गृहीत्वा निर्मितमस्ति। किन्तु नाटकस्यार्धाभिनयं यावन्मेघदूतस्य किमपि दायित्वं तत्र न लक्षितम्। यत्र मेघदूते कालिदासेन 'आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तैर्नान्यस्तापः कुसुमशरजादिष्टसंयोग-साध्यात्' इत्थं प्रत्यपादि तत्र 'मेघमेदुरमेदिनीयम्' इत्यस्य लेखिकया स्वस्यां नाट्यकृतावस्यां वर्गसंघर्षस्य चित्रं प्रतिकृतम्। कल्पनेयं कालिदासीयकथा-वस्तुविन्यासविपरीतम्। अस्माभिरवगन्तव्यं यत् संस्कृतनाटकेषु कथावस्तु-विन्यासस्तेषां सर्वाधिकसूक्ष्मप्रक्रिया वर्तते। यस्याः सरणौ विशालकथाप्रपञ्चो होरात्रयस्याभिनये आकुञ्चितः। प्रकृतनाटके मुधा कथाविस्तारं कृत्वा 'तिले तालं पश्यति' इति लोकोक्तिश्चरितार्थीकृता।

अस्माकं साग्रहं निवेदनं यत्संस्कृतानुरागिणः संस्कृतनाटकानामभिनये भरतकालिदासादीनां दायभागस्य ग्रहणं कृत्वा भारतीयपरम्परां निर्वहेयुः हिन्दीरङ्गमञ्चं नानुकुर्युः।

## दिवङ्गताः पण्डित शेषमणिमिश्र महाभागाः

प्रयागे उपगङ्गं विद्यमानस्य शिवशर्मासंस्कृतपाठशालस्य प्रधानाचार्याः अस्मद्गुरुचरणाः पण्डितशेषमणिमिश्रा [illegible] तिथौ स्वजन्मभूमावेव ७८ वर्षवयसि नश्वरं पार्थिवकलेवरं परित्यज्य स्वर्गावासमकुर्वन्। प्रयागमण्डलान्तर्गतमेजाजनपदे 'खदरहनपुरा' नामग्रामं मिश्रमहोदयः स्वजनुषाऽलङ्चकार। वैयाकरणः शिक्षाविद् साहित्य-पण्डितो मिश्रमहाभागः संस्कृतभाषां पण्डितपरम्परां प्रति च महतीमास्थां निःस्वार्थसेवाभावञ्च प्रारम्भत एव स्वहृदि निधाय यावज्जीवमध्ययनाध्यापनयोर्निरतोऽभवत्। विद्यालयमेव स स्वगृहं जीवनञ्चामन्यत। तत्र जीवनयापनसौविध्यं तेन लभ्यते न वेति नासीत्तस्य चिन्ताविषयः। स तु केवलं 'चरैवेति चरैवेति' इति वाक्यं चरितार्थयन् कर्तव्यपरायणोऽवर्तत। ईदृशैः निष्ठावद्भिः संस्कृतानुरागिभिः पण्डितैरेव संस्कृतभाषा जीव्यते।

समुपागतेऽस्मिन् दुष्काले पण्डितपरम्परावसानकालेऽस्माकं मध्ये मिश्रमहोदयस्याभावो नितरां शोकजनकः। अस्माभिर्दिवङ्गतात्मने स्वश्रद्धाञ्जलिः समर्प्यते प्रार्थ्यते च परमात्मा तस्य सद्गतये। मिश्रमहोदयस्य कुटुम्बिजनान्प्रत्यस्माकं महती समवेदना शोकापनोदाय ईशप्रार्थना च स्तः।



# SAṄGAMANĪ

( Sanskrit Quarterly Magazine )

Edited

by—Prabhat Shastri Sahityacharya

Annual Subscription —

Rs. Twelve
Per copy - Rs. 3/50 } In Foreign

---

संगमनी—दिल्ली कार्यालयस्य सङ्केतः—

श्रीगोकुलचन्द्रशास्त्री

[अवैतनिकप्रबन्धसम्पादकः]

५१ राजाकेदारनाथ गली

चावड़ी बाजार,

दिल्ली—

---

Published by Prabhat Shastri for Sanskrit Sahitya Parisha Daraganj, Allahabad-6 (India) and Printed by him at Allahabad Block Works Pvt. Ltd. Allahabad-3

उत्तरप्रदेशीय-शिक्षा-विभागीय-वी-१४५९१-१४८३०।१८-८२
(१२)६६-६७लखनऊ-२९नवम्बर'६६ (गजट भाग-४)
द्वारा एषा पत्रिका विद्यालय-महाविद्यालय-दीक्षा-
विद्यालयीय-पुस्तकालयेषु क्रयार्थं स्वीकृता ।

अनुक्रमः







# संगमनी

# Sangamani

Sanskrit Quarterly

**संस्कृत त्रैमासिकी**

चतुर्थवर्षे तृतीयोऽङ्कः

संवत् २०२५

•

सम्पादकः

**प्रभात शास्त्री**

सहसम्पादकौ

**तारिणीश झाः** **डा० जयशङ्कर त्रिपाठी**

•

प्रयागस्थ-संस्कृत-साहित्य-परिषदः प्रकाशनम्

कार्यालयः
संगमनी
दारागंज—प्रयागः

वार्षिकं मूल्यम्
रु० ५·००
प्रत्यङ्कम् रु० १·५०

परामर्श-समज्या

डा० हरवंशलाल शर्मा (अलीगढ़म्)

श्रीबालकृष्णराव: (प्रयाग:)

श्रीकमलापति मिश्रः

लक्ष्यं योजना च

- इयं संगमनी संस्कृतस्य निःस्वार्थसेवाया नामान्तरम् ।
- अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्ण-लेखानां परिचर्चायाश्च प्रकाशनम्,
- संस्कृतभाषाया अप्रकाशितपाण्डुलिपेश्च प्रकाशनं भवति ।
- अनया संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्नो विधीयते ।

●

# संगमनी

। । ।
अहं राष्ट्री संगमनी वसूनाम्

—ऋग्वेदे १०।१२५।३

४ वर्षे (VoL. IV) * संवत् २०२५ * (N0. 3) ३ अङ्कः

## भगवान् परशुरामः

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं, रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तङ्गतम् ॥

गोत्राचारविशेषपारगतया वृद्धाभिरादिष्टया
मात्रा वस्तुषु तेषु तेषु विशदन्यस्तेषु दृष्टेः पुरः ।
अन्नप्राशनवासरे सरभसं वक्षोभरोत्सर्पिणा
येनात्तं धनुरीक्षिताश्च झटिति क्षत्रावतंसा दिशः ॥

—केशटस्य

सूक्तिसिद्धानां प्राक्तनकवीनाम्

# शाल्मलि-काव्यम्

पुष्पं रक्षतु कण्टकैः परिमलेनानन्दयन्केतकीः
किं चासौ पनसः सुधासहचरस्वादातिहृद्यं फलम् ।
नामोदः कुसुमे फलेषु न रसस्तत्किं मुधा शाल्मले
काण्डं निर्भरमावृणोषि विषमैरामूलतः कण्टकैः ॥

—नाकोकस्य

आहूतः परितो दिगन्तगतिभिः शाखाभराडम्बरैः
किं रे जाल्म जवेन शाल्मलिफलप्रत्याशया धावसि ।
तस्मिन्नेकपदे भिदेलिमफलव्यालोलतूलोत्करै—
रध्वानोपि निमीलिताक्षमटता न प्रेक्षणीयाः पुरः ॥

—जलचन्द्रस्य

एतस्मिन्कुसुमे स्वभावमहति प्रायो गरीयः फलं
रम्यं स्वादु सुगन्धिशीतलमलं प्राप्तव्यमित्याशया ।
शाल्मल्याः परिपाककालकलनारोधेन कीरः स्थितो
यावत्तत्पुटसन्धिनिर्गतपतत्तूलं फलात्पश्यति ॥

—शालिकनाथस्य

डा० रुद्रदेव त्रिपाठी

# चक्रबन्धानामुद्‌गमो विकासश्च



विगतेभ्यः कतिभ्यश्चिद्‌शकेभ्यः संस्कृतसाहित्यस्य विभिन्नान्यङ्गान्यधिकृत्य प्रवृत्तस्य शोधकार्यस्य परिसरे सुबहवो विषया बहोः कालादद्य यावत् प्रत्यहं प्रवहमाना अपि लौकिकापेक्षोपेक्षाभ्यां वृद्धिह्रासदृष्टया प्रतीतिपथमागताः। तेषु चित्रबन्धसाहित्यमपि स्वीयं वैविध्यं धारयद् विपुलपरिमाणेन सङ्गृहीतम्। स्वस्य विविधैर्भेदोपभेदैः सहस्रशः प्रकारविशेषान् धारयतोऽस्य साहित्यस्य केवलमाकारचित्रदृष्ट्या विभाजनेन १—मङ्गलचित्र—२—वनवैभवचित्र—३—आभरणचित्र—४—शस्त्रास्त्रचित्र—५—प्राणिचित्र—६—प्रकीर्णचित्र-बन्धाश्चेत्येवं षड् भेदा भवन्ति। प्रत्येकं प्रकारस्य परिष्करणेन च नानाभेदाः कविभिः स्वस्वकाव्यस्तुतिमुक्तकादिग्रन्थेषु प्रदर्शिताः। तत्र शस्त्रास्त्रचित्रबन्धानामपि सन्ति भूयांसः प्रकारविशेषाः। येष्वन्यतमस्य चक्रबन्धस्यात्र विवेचनं प्रस्तोतुकामैरस्माभिस्तदुद्‌गमविकासावधिकृत्य मनाङ् निवेद्यते।

## चक्रबन्धानामुद्‌गमः

भारतीयेषु शास्त्रेषु मुख्यत्वेन शस्त्राणां चत्वारः प्रकाराः प्रदर्श्यन्ते। तत्र हि १—मोच्यं शस्त्रम्, २—अमोच्यं शस्त्रम्, ३—मोच्यामोच्यं शस्त्रं, ४—यन्त्रमोच्यं शस्त्रञ्च। एतेषु यानि मुच्यन्ते—प्रक्षिप्यन्ते तान्यस्त्रशब्देन व्यवह्रियन्ते, तथा यानि हस्ते धारयित्वैव प्रहारायोपयुज्यन्ते तानि शस्त्रशब्देन व्यवह्रियन्ते। शल्यभल्लादीनि मोच्यामोच्यानि बाणादीनि च यन्त्रमोच्यानि सन्ति। एवं विभिन्नेष्वेतेषु शस्त्रास्त्रेषु भारतीयदेवानां देवीनाञ्च हस्ते चक्रास्त्रस्य धारणं प्रायः शास्त्रसिद्धम्। भारतीयानां साहित्यकाराणां देवविषयिणी भक्तिः प्राथम्येन प्राचीनकालादेव विलोक्यते। श्रीविष्णोः सुदर्शनचक्रस्य

श्रीदेव्याश्च विविधाकारकचत्राणां स्तुतयो बहुत्र लभ्यन्ते । काव्ये केवलं श्रव्यस्य सद्भावमेव पूर्णममन्वानैश्चित्रकविभिस्तत्र दृश्यत्वाग्रणोपगिपया प्रकृतेः परमोदारां प्रसूतिं पुष्पं परिलक्ष्य तदुपरि मधुपानाय परिभ्रमतो मधुकरस्य गुञ्जनं चंक्रमणञ्चात्मसात्कृत्य संगारस्यास्य चक्रारपंक्तिसाम्यं परिकल्पितं किञ्च ततः परं चङ्क्रमणसाधनेषु रथस्य चक्रद्वितयीमाकलय्य तन्नेमिभ्रमणवैचित्र्यं विविच्यैव चक्रबन्धकाव्यस्य निर्माणं कृतं भवेत् । एवं मानवताया विकासेन सह चक्रस्य प्रारम्भस्तथा चित्रकाव्यविकासेन सहैव चक्रबन्धपद्यरचनाया उद्गमः सञ्जातः स्यादिति गदितुं शक्यते । संस्कृतसाहित्यस्य विपुलतया मध्यकाले विशृङ्खलतया चास्य कालनिर्धारण न विचारसहम् । प्राप्तसाहित्यपरामर्शेन तु सर्वतः प्रथमं स्वामिनः श्रीसमन्तभद्रस्य "स्तुतिविद्या—जिनशतक' नामनि ग्रन्थे चक्रबन्धपद्यानि मिलन्ति । अस्य च महाभागस्य कालो विक्रमस्य द्वितीया तृतीया वा शती मन्यते । किञ्चास्य ग्रन्थस्य चक्रबन्धानां चत्वार प्रकारास्त्रयोदश पद्यानि चास्य साहित्यस्य प्रारम्भिकीमपि वैविध्यपूर्णामुद्गतिं सूचयन्ति । ततोऽग्रे जानकीहरणमहाकाव्यस्य प्रणेता—यः किल भारवि—माघयोर्मध्यवर्तिनि काले सञ्जात इति गण्यते, श्रीकुमारदासोऽष्टादशे सर्गे त्रिसप्ततितमं पद्यं चक्रबन्धरूपेण प्रस्तौति । माघस्य शिशुपालवधकाव्येऽस्यैव चक्रबन्धस्य विकासः षडरचक्रे नामाङ्कनेन जातः । एवं सम्प्राप्तसाहित्यस्याधारेण चक्रबन्धस्योद्गमकालो विक्रमस्य प्रथमा द्वितीया वा शती निर्धारयितुं पार्यते ।

## चक्रबन्धानां विकासपरम्परा

कमलबन्धानामाकारानुसारि पद्यसाहित्यं द्विदल—त्रिदल—चतुर्दल—पद्मेभ्य आरभ्यते, परं चक्रबन्धे न तथा । अत्र तु प्रारम्भादेव नेमिचतुष्टयीसहितं चक्रमुदाहृतं दृश्यते । ततः परं षडर—अष्टार—द्वादशार—अष्टदशार—द्वात्रिंशदर—प्रभृतयो बन्धाः कविभिर्निर्मिताः । प्रत्येकं चक्रबन्धस्य प्रकारान्तरसम्पादनाय पठितिभेदाः, नाम—धामाङ्कन—पद्याङ्कन—विविधबन्धपद्यसम्मिश्रणजन्याः पद्धतयः समाहृताः । चित्रकवेस्तदेवास्ति वैशिष्ट्यं यत् तदीयकृतौ

किमपि तादृशमाश्चर्यकारि तत्त्वं समायोजितं भवति यस्य ज्ञानेन पाठकस्य चित्तं चित्रम्––आश्चर्यमनुभवितुं तत्परं भवति। चित्रशब्दस्य व्युत्पत्तिदृष्टयाऽप्ययमेवार्थः स्फुटो भवति। तथा हि चित्रकवेः स्वान्ते प्रारम्भतश्चित्रशब्दस्याद्भुत इत्यर्थ एव निहित आसीत्, परस्ताच्चालेख्यगतचित्रस्य कल्पना समुद्गता। यतो हि चित्रकाव्यसाहित्ये नैकशो भेदास्तादृशास्सन्ति येष्वद्भुतत्वस्यैवास्ति प्राधान्यम्। उत्तरकालिका लक्षणकर्तारोऽपि––"भङ्ग्यन्तरकृततत्क्रमवर्णनिमित्तानि वस्तुरूपाणि। साङ्कानि विचित्राणि च रच्यते यत्र तच्चित्रम्॥ (रुद्रटस्य काव्यालङ्कारे), गोष्ठयां कुतूहलाध्यायी वाग्बन्धश्चित्रमुच्यते॥(३४३–२२, अग्निपुराणे) वर्णस्थानस्वराकारगतिबन्धान् प्रतीह यः। नियमस्तद्बुधैः षोढा चित्रमित्यभिधीयते॥ (२–१०९, सरस्वतीकण्ठाभरणे)। एवं प्रामुख्येन चित्रशब्दस्याश्चर्यार्थमेव स्व्यकुर्वन्, तद्भेदेषु चाकारचित्रमप्येकस्मिन् भेदे प्रादर्शयन्। लाक्षणिकेषु साहित्यग्रन्थेषु शब्दालङ्कारान्तर्गतस्य चित्रालङ्कारस्य सर्वतः प्रथमं लक्षणाख्यानं रुद्रटेनैव विहितम्। तत्रैव रुद्रटेन चक्रबन्धस्य विशिष्टं रूपमपि पुरस्कृतम्, यत्र सन्त्यष्टौ पद्यानि भिन्नभिन्नाकारबन्धखचितानि समष्टिरूपेण च तेषु पद्येषु स्वस्य परिचयप्रदायकानुष्टुप्पद्यस्य च गर्भितत्वमप्यस्ति। एवं सोऽयं चक्रबन्धस्य प्रकारविशेषो विशिष्टरूपेण विकसितचरः। लक्षणदृष्ट्या च लक्षणग्रन्थेषु विशिष्य विवेचनं यद्यपि न कृतं विद्यते तथापि टीकाकृद्भिः काव्यकारैश्च स्वीयरचनागतवैशिष्ट्यविवेचनाय गद्येन पद्येन पद्यैर्वाऽस्य विमर्शो विहितः।

समष्टिरूपेण सम्प्राप्तानां चक्रबन्धानां विकासपरम्परायाः पर्यालोचनेन ज्ञायते यच्चक्राकृतिषु चतुःपञ्च भेदा एव परिगणिताः। तेषु चतुरर––षडर––अष्टार––द्वादशार––अष्टादशार––द्वात्रिंशदरप्रभृतयो भेदा एव प्रायेण प्रयुक्ताः सन्ति। इयं भेदवीथी क्रमशः एकाङ्क––द्व्यङ्क––त्र्यङ्क––चतुरङ्कपद्धत्या श्लोकाङ्क––कवि––काव्य––स्तव्य––गुरु––कृतिवैशिष्ट्यादि––गर्भप्रक्रियया, केवलपठनेन, गतागतपठनेन, ग्रहमुक्तपठनेन, आद्यन्त्याक्षरग्रहणपठनेन, केवलमध्याक्षरग्रहणपूर्वकपठनेन, विशिष्टस्थानाक्षरपठनेन, प्रश्नपद्धत्या, चक्रीत्या पठनेन च बहुत्वं प्रतिपद्यते। किञ्च सर्वेऽपि चक्रबन्धाः सकर्णिका एव भवन्ति,

इत्यपि न निश्चितम्; यतः श्रीमत आनन्दवर्द्धनस्य द्वात्रिंशदरचक्रबन्धो निष्कर्णिक एवास्ति । इत्थं चक्रबन्धे क्वचन लघुचक्र—दीर्घचक्राकलनेन, परिधिसंयोजनेन, नेमि—नेमिसन्धि—दिग्रेखा—विदिग्रेखासूचनेन च वैविध्यं प्राप्यते । उपलब्धेषु चक्रबन्धेषु रुद्रटानुकर्तृभिरष्टारचक्रबन्धादग्रेऽष्टादशारचक्रबन्धो विहितः, परं देवीशतककर्तुरानन्दवर्द्धनाचार्यस्य चक्रबन्धे षोडश श्लोकाः सन्तोऽपि लेखनवैपरीत्येन द्वात्रिंशदरचक्रबन्ध एव ते समाविशन्ति ।

सोदाहरणं विवेचनम् (चतुरर—चक्रबन्धाः)

प्रथमतश्चक्रं वर्तुलाकारमित्येवार्थं मनसि निधाय सूर्यचन्द्रमसोराकारं चक्राकारं मत्वा वर्तुलाकृतिकबन्धनिर्माणमेव कृतं स्यात् ? सूर्यबन्ध—चन्द्रबन्धावप्यद्य प्राप्येते परं तौ तु न प्राचीनाविति तु निश्चितमेव । अतश्चतुररचक्रबन्धस्यैवात्र प्राथम्यं शस्यते । स्तुतिविद्यायां श्रीसमन्तभद्राचार्येणास्य बन्धस्येदमुदाहरणं दत्तम्—

नन्द्यनन्तद्ध्यर्चनन्तेन नन्तेनस्तेऽभिनन्दन ।
नन्दनर्द्धिरनम्रोन नम्रो नष्टोऽभिनन्द्य न ॥२२॥

अस्य पद्यस्य प्रथमाक्षरं कर्णिकायां, चतुर्दिक्षु प्रत्यरं वर्णद्वयीं तथा नेमिसन्धिषु—विदिक्षु वर्णद्वयी प्रतिसन्धि संलिख्य प्रवेश—निर्गम-भ्रमणक्रमेण पठनं क्रियते । तल्लक्षणं यथा मम—

कर्णिकातो व्रजेदूर्ध्वं सन्धौ भ्रान्त्वा ह्यरे पुनः ।
प्रविशेत् कर्णिकां यावच्चक्रे तुर्यारकाह्वये ॥ इति ।

अत्र पद्येऽन्यदप्येकं वैशिष्ट्यमस्ति यदत्र गर्भे महादिक्षु चैकः समान एवाक्षरो नकारः स्थाप्यते, अन्त्योपान्त्यवर्णौ च द्विवारं पठ्येते । एवं कवेः प्रतिभाबलेन यत्र तत्रैकस्मिन् चित्रबन्धपद्ये स्वेच्छयाऽनिच्छया वाऽपि कस्यचिदन्यस्य चित्रात्मकतत्त्वस्य समावेशो भवति स च तस्य गौरवाय भवतीति । तत्रैव पूर्वोक्तायां पद्धतौ कर्णिकाक्षरवदेव महादिक्षु वर्णस्थापनानुरोधस्य परित्यागेन द्वितीयः प्रकारश्चतुररचक्रस्योदेति । यथा—

वरगौरतनुन्देव वन्दे नुत्वा क्षमार्जव ।
वर्जयार्तिं त्वमार्याव वर्याभायोरुगौरव ॥२६॥

सरस्वतीकण्ठाभरणे भोजराजेन—"सासवात्वा सुमनसा" इत्यादि चतुर्दलकमलबन्धोदाहरणं प्रस्तुतं तदस्यैव चक्रबन्धस्य प्रतिरूपम् । अस्य बन्धस्य तृतीयः प्रकारोऽलङ्कारचिन्तामणौ 'पादोत्तरजाति'रिति नाम्ना प्रदर्शितः । आचार्योऽजितसेनो बन्धमिमं कर्णिका—लघुचक्र—दीर्घचक्र—रेखाभ्यो निरमात् । किञ्चाकृतिभेदेन सहैवाष्टादशभिः प्रश्नैर्विविधान् शब्दानुद्भाव्य तेषामेवैकत्र मेलनेन पद्यमेकमभावयत् । यथा हि—

नयप्रमाणसम्बुद्धिः शमः का श्रीमुखेऽपि सा ।
किं निषेधेऽव्ययं लोकनाशिनी दुःखि किं कुलम् ॥७३॥
किं पुमानन्नसम्बुद्धिः का च नश्वरनिः स्वने ।
लोटि किं पदमस्माकमित्यर्थे केन नाश्यते ॥७४॥
वस्त्वंशो बुद्धयते केन वक्ष श्चक्रं रमा च का ।
संवत्सरार्धसम्बुद्धिः का कथं जिन ईड्यते ॥७५॥

एतेषां प्रश्नानां क्रमश एतान्युत्तराणि लभ्यन्ते—"नयमान, क्षमा, मा, नन, मा, मारी, आर्ति, ना, अशन, नशनाद, स्य, नः, येन, नयेन, उरः, अरि, मा अयन, कथं जिन ईड्यते ? इति प्रश्नस्य सर्वश्लोकार्थं एवोत्तरम् । श्लोकश्च स्तुतिविद्याया एव । यथा—

नयमानक्षमामान न मामार्यार्तिनाशन ।
नशनादस्य नो येन नये नोरोऽरिमायन ॥५३॥

अत्र नकारः कर्णिकाक्षरः पठनपद्धतिश्च पूर्वोक्तैव ।

श्रीपुञ्जराजः "शिशुप्रबोधकाव्यालङ्कारे"ऽस्यैव चतुररचक्रस्य चतुर्थं प्रकारं प्रादर्शयत्, तत्र कर्णिका—नेमि—परिधिगताक्षराणां गतागतपद्धत्या पठनं भवति । तच्च त्रिष्वरेष्वेव । चतुर्थेऽरे स्थितानक्षरान् पठित्वा च परिधिगतानामक्षराणां पठनेन पद्यस्य पूर्तिर्भवति । यथा हि—

श्रीदं साक्षात् को हरन्तं-नृवृन्दा, गोघौघं व्यामोहहीनं जपेन ।
विभ्राजन्तं नेह मान्यत्यमन्द, श्रीगोविन्दानन्द मत्यन्यमाह ।।४६।।

"श्रीगोविन्दानन्द" इत्ययमत्र रतव्यनामाङ्कः क्रमशस्त्रिभ्यश्चरणेभ्यः पूर्वमाद्याक्षरैः परश्चान्त्याक्षरैः साधितः । षडरचक्रस्यास्मिन्नेव प्रचलिते प्रकारे—इष्टपादवलय—प्रथमचतुर्थसप्तमवलयैकाक्षरसंयोजनं विधाय स्तुतिविद्याकारो वैशिष्ट्यं प्रास्तौत् । तत्र हि गर्भाक्षरस्य षण्णामराणां प्रथमचतुर्थसप्तमवलयेषु—एकोनविंशतिवारं लेखनं भवति, अष्टाविंशतिवारं च सः पठ्यते । कवि-काव्य-नामगर्भमपि चक्रवृत्तं तत्र विद्यते । अस्मिन् ग्रन्थे सप्त सङ्ख्याकाश्चक्रबन्धश्लोकाः सन्ति । षड्दलकमलबन्धस्य त्रयोऽन्ये प्रकारा अपि मिलन्ति, येषां चक्रबन्धरूपेण निरूपणं कर्तुं शक्यते ।

अष्टारचक्रबन्धाः

अष्टारश्चक्रबन्धो राजस्थानस्य सुप्रसिद्धे चित्तौड़दुर्गे त्रिमूर्तिमन्दिरस्यैकस्मिन् शिलालेखेऽङ्कितो मिलति । अनुष्टुप्छन्दसा निबद्धं तदीयं पद्यं गतागतपद्धत्या पठ्यते । कर्णिकायामेकोऽक्षरोऽस्ति, परिधौ चाष्टसु लघुचक्रेषु प्रत्येकं द्वौ द्वावक्षरौ वर्तेते । अनयोः कर्णिकानिकटस्था वर्णाः श्लिष्टाः सन्तो द्विद्विवारमावर्त्यन्ते ।

पद्यञ्च— हरोऽस्तु रोहनामो ना हव्यकव्यहसेलसे ।
हरस्य रहतोप्रीतो हरते रहसीरसी ।। इत्यस्ति ।

एकाङ्काष्टारचक्रबन्धस्योदाहरणं धर्मघोषसूरेः सर्वजिनस्तवनात् प्राप्नुमो, यस्यालङ्कारचिन्तामणौ लक्षणमित्थं विद्यते—

चक्र त्वालिख्य मध्ये विलखतु सदृशं वर्णमेकं चतुष्कं,
तद्द्वारासु प्रलेख्यं प्रविलिखतु महादिक्षु चत्वारि विद्वान् ।
मध्ये रुद्धानि सप्तेतरवरदिगरेष्वष्ट रूढानि कुर्यात्,
कुर्याद् बाह्यासु दिक्षु प्रलिखतु विषमान् वा समान् श्लोकचक्रे ।।२-७७।।

उदाहरणपद्यञ्च—

इत्थं धर्मवचोवितानिरचितं वर्य स्तवं मुद्युतः
सद्धर्मद्रुमसेकसंवरमुचां भक्त्यार्हतां नित्यशः।
श्रेयः कीर्तिकरं नरः स्मरति यः संसारभास्कृत्य सो--
ऽलीलार्तिः परमे पदे चिरमितः प्राप्नोत्यनन्तं सुखम् ॥८॥

अस्याऽष्टारचक्रवृत्तस्य षडरबन्धान्नास्ति वैशिष्ट्यं यतस्तत्र त्रयाणां चरणानां षट्स्वरेषु समावेशो भवति चतुर्थश्च चरणं परिधिगताक्षरैः पूर्यते। अत्र तु चतुर्णामपि चरणानामष्टसु नेमिषु क्रमशः पठनेन पद्यं पूर्यते। केवलं मध्याक्षरस्य चतुर्वारं श्लेष एवात्र चित्राय। मन्येऽत एव काव्यकल्पलतावृत्तिकारेणामरचन्द्रसूरिणा द्वाभ्यां पद्याभ्यामष्टारचक्रबन्धस्य नवीनः प्रकार आविष्कृतः। अत्र कर्णिकातः पद्यारम्भो भवति तथा परिधिमध्येऽन्यदेकं पद्यं लिख्यते यस्मिन् सकलानामप्यराणां शीर्षवर्णा गृह्यन्ते। उदाहृते च पद्ये इमे--

विश्वावरोधाय विरोधबाधका विपत्तयो जालविकर्तनोर्जिताः।
विधूदयद्दामविशुद्धकीर्तिभा विभान्ति सन्तः सविवेकवैभवाः॥
वाचं स्मृत्वा यतीन्द्रेण काव्यकल्पलता कृता।
तारश्रीरभरेणेयं भावनीया सतां गणैः॥ (पृ० १०२)इति।

हरिचन्द्रकविः स्वीये 'धर्मशर्माभ्युदय-महाकाव्ये' ऊनविंशे सर्गेऽस्यैवाष्टारचक्रबन्धस्य निर्मितिं द्वाभ्यां पद्याभ्यां सम्पाद्य तत्र स्वस्य, स्वपितुः, काव्यस्य च नामानि पद्येनैकेनाङ्कितवान्। 'आतङ्कार्तिहरस्तपद्युमणिसद्भूरिप्रभाजिद्वसु' इत्यादिपद्यस्थो दशमाक्षरो मध्यकर्णिकायां लिख्यते तथा चतुर्ष्वपि चरणेषु स्थितानां क्रमशः प्रथम--तृतीय--षष्ठाष्टम--द्वादश--चतुर्दश--सप्तदशोनविंशतितमाक्षराणां मेलनेन--

आर्द्रदेवसुतेनेदं काव्यं धर्मजिनोदयम्।
रचितं हरिचन्द्रेण परमं रसमन्दिरम्॥ इति पद्यमुदेति।

परिधिश्लोकोऽत्र--'दम्भलोभभ्रमा०' इत्याद्यन्यो विद्यते यस्य प्रथमाक्षरस्तथा तदुत्तरवर्तिनोऽन्ये षडक्षरा अपि श्लिष्टा भवन्ति।

रुद्रटस्याष्टारचक्रबन्धोऽस्याः शैल्या विशिष्टमुदाहरणमस्ति। 'मारारिशक्रामेभ०' इत्यादि पद्याष्टकेन निर्मितेऽस्मिन् बन्धे क्रमशः खड्ग–मुशल–धनुः–शर–शूल–शक्ति-हलसंज्ञकबन्धानामपि समावेशोऽस्ति। अर्धं पद्यं नेमौ तदर्धं च परिधौ पूर्तिं गच्छति। "मा" इत्यक्षरोऽत्र कर्णिकागतः, प्रत्यर्धालि च क्रमशश्चतुर्थाष्टमद्वादशषोडशसंख्यागतैरक्षरैश्च 'शतानन्दापराख्येन भट्ट वामकसूनुना। साधितं रुद्रटेनेदं सामाजा धीमतां हितम्॥' इति पद्यमङ्कनरूपं प्राप्यते। भूयसा श्रमेण साध्येयं कृतिरिति किं कथनीयम्? अनयैव पद्धत्याऽवतारकविः "ईश्वरशतके' शक्तिबन्धस्थाने डमरु-बन्धं निर्मायाष्टारचक्रबन्धं प्रस्तुतवान्। साम्प्रतिकेषु कविषु चित्रकवि. श्रीरामरूपशर्मा श्रीरेवाप्रसादद्विवेदिप्रभृतिरपि बन्धस्यास्य निर्माणं कृतमिति नितान्तं तोषाय। द्वादशार-षोडशारयोरपि कमलबन्धानुकारेण निर्माणं सम्भाव्यते परं नाद्यावधि स्वतन्त्राण्युदाहरणानि प्राप्तानि।

## अष्टादशारचक्रबन्धौ

अष्टादशारचक्रबन्धस्यैकमुदाहरणं कुलमण्डनसूरेः 'वीरजिनस्तवने' प्रस्तुतमस्ति। तत्र रुद्रटस्यैवानुकरणं विधायाष्टादशभिरन्यैर्बन्धैः पूरणमस्ति। प्रत्यर्धालि क्रमशश्चतु[illegible]संख्यावतां चक्रावर्तिताक्षराणामष्टादशानां चतुर्थाक्षरश्रेणेण शार्दूलविक्रीडितस्य छन्दसोऽङ्कनं विहितम्। तच्च पद्यमिदमस्ति—

यस्तेऽष्टादशचित्रचक्रविमलं वीर स्तवं सश्रियं
भक्त्यैवं कुलमण्डनोऽतत महाज्ञानातनुश्रीशुभ।
मुक्तश्रीयुतचन्द्रशेखरगुरु — प्राज्यप्रसादादमुं,
तं तातावरः स शान्ततम शं भासा ततः सन्ततम्॥२०॥

इत्थं स्तोत्रनाम-गुरुनाम-स्वनामाद्यङ्कनयुतेऽस्मिन् चक्रबन्धे प्रतिपद्यं प्रथमाक्षरस्तकारोऽष्टादशवारमावृत्तस्तथा प्रतिपद्यं द्वितीयस्य चरणस्याष्टमोऽक्षरोऽपि तृतीयचरणस्य प्रथमाक्षररूपेण श्लिष्टो भवति। तदेतदेतस्यान्यतमद् वैशिष्ट्यम्। अस्मिन् संगृहीतानां बन्धानां नामानीत्थं सन्ति स्मरणीयानि—'मुसल—

शूल–शङ्ख–श्रीवाणी–चामर–हल–भल्ल–धनुः–खड्ग–शक्ति–छत्र–रथपद–पूर्ण-कलशार्धभ्रम–शतदलकमल–शर–त्रिशूल–वज्रबन्धाः । अस्यैव बन्धस्यापरा पूर्तिः श्रीविनयविजयगणिना 'आनन्दलेख'स्य चित्रचमत्कार नामके प्रथमेऽधि-कारेऽपि विहिता विद्यते । तत्र त्रिशूलबन्धस्थाने केवलं शूलबन्धं दत्वा श्रीवत्स-बन्धस्य प्रवेशः कृतः, किञ्च 'महामहोपाध्यायश्रीकीर्तिविजयगणिगुरुभ्यो नमः' इति तत्राङ्कितमस्ति ।

'चित्रकोष' काव्यस्य श्रीजिनवर्णनाधिकारे विंशतिदलकमलनाम्ना बन्धस्यै-कस्योदाहरणमस्ति, यस्यालेखनप्रणाली रुद्रटमेवानुकरोति तत्र हि क्रमशश्छत्र–चामर–स्वस्तिक–श्रीकरी–कलश–खड्ग–धनुः–शक्ति–भल्ल–वज्र–मुद्गर–हल–मुशल–शर–त्रिशूल–शङ्ख–रथार्धभ्रम–कमल–ध्वज–बन्धानां समवायोऽस्ति । परिधिकाव्यश्च तस्य—

तं देवं शाश्वतश्रीसमुदितमहसाऽनन्तरूपं भदन्तं
त्रस्तानां सान्तदाने सुरतरुमरुजं तत्वबोधं क–त्तन्त्रम् ।
नत्वा सन्तं सुरेशार्चितमुदयभृतं शुक्लमांसान्तभानं
तत्वन्तं नाथ भावं तनुसुभगतराकारतः सङ्कसन्तम् ।।

इत्थमस्ति । यदि नाम चतुर्विंशतिदल–त्रिंशद्दलयोः कमलबन्धयोरप्यत्रानु-करणं क्रियेत चेत्तदा चक्रबन्धसाहित्ये तदीयरचनाप्रक्रियायाञ्च नवीनो दायः कवेः स्यात् ।

## द्वात्रिंशदरचक्रबन्धौ

द्वात्रिंशदरचक्रबन्धस्य योजना श्रीमदानन्दवर्धनस्य देवीशतके मिलति । अस्ति तत्रेदं नावीन्यं यत् तस्मिन्नप्रत्यभिज्ञायमक–गोमूत्रिका–गूढचतुर्थपाद–गोमूत्रिका–सन्दष्टयमक–द्वयक्षरपादगोमूत्रिका–रेफविवर्तिक–द्वयक्षर गोमूत्रिका-श्लोकार्धद्वयक्षररूपैः कतिपय पद्यैश्चतुर्भिश्च बन्धहीनैः शुद्धपद्यैः पद्यद्वयेन सार्धैक-पद्येन च जालतूणबन्धाभ्याञ्चास्य बन्धस्य निर्माणं भवति । षोडशपद्यान्येवात्र प्रथमं षोडशारेषु शिखराद् नाभि यावदङ्कितानि भवन्ति तान्येव च पुनर्नाभितः

शिखरं यावदङ्कितानि क्रियन्ते । परिधेः पूर्तयेऽन्येषां चतुर्णां पद्यानां साहाय्यं गृहीतमस्ति येषु प्रतितृतीयाक्षरानन्तरं शिखरसन्धिगतानामक्षराणां श्लिष्टरूपेणावर्जनं विधीयते । मध्ये कर्णिकायां नास्ति कश्चिदपि वर्णः । द्वात्रिंशदक्षरात्मकस्यानुष्टुभोऽत्र प्रयोगेन द्वात्रिंशत्सु वलयेषु वर्णसंस्थितिस्तथा षोडशपद्यानां द्विवारमावर्तनेन द्वात्रिंशदरेषु लेखनमत्र भवति । कर्णिकाया निकटस्थात् तृतीयचक्रात् परिधिनिकटस्थात् त्रिंशत्तमचक्रांश्च वर्णग्रहणेन रचनाकारण-कृतिनामपितृनाम—स्वपरिचयात्मकमेकं पद्यमुत्पद्यते तथा परिधिगतद्वितीयपद्यात् शब्दान् सञ्चित्यैकाऽऽन्याऽऽर्याऽप्युद्ध्रियते । सेयं पद्धतिः 'पद्यामृतसरोवर'स्य चित्राख्यानतरङ्ग—गतच्छन्दोमयचित्रालङ्कारप्रक्रियया——एकस्माच्छन्दसोऽन्यच्छन्दसमुद्धरणात्मिकया—समानतां भजते। यथा—

त्वं साज्ञासु जगन्मातः स्पष्टं ज्ञात्वा सुवर्त्मसु ।
प्रज्ञा मुख्या समुद्भासि तत्पृथुत्वं प्रदर्शय ।।६७।।

आर्याचेयं——आज्ञासु जगन्मातः स्पष्टं ज्ञाता सुवर्त्मसु प्रज्ञा ।
भासि त्वं सा मुख्या समुत् पृथुत्वं प्रदर्शय तत् ।।६८।।

एवं ध्वन्यालोककर्तुरानन्दवर्धनस्य चित्रबन्धसाहित्ये विशेषतश्च चक्रबन्धसाहित्येऽस्त्यन्यतमो दायः । न तावदद्यावधि केनाप्यस्यानुकरणं कृतमिति कष्टसाध्यत्वमस्य स्पष्टमेव । अत एवाङ्कितवाँस्तत्र भवानानन्दवर्धनः —

देव्या स्वप्नोद्गमादिष्ट-देवीशतक संज्ञया ।
देशितानुपमामाधादतो नोणसुतो नुतिम् ।।१०६।।

श्रीज्ञानसागराचार्यशिष्यः श्रीलब्धिसागरनामा जैनकविरप्येकं द्वात्रिंशदरचक्रबन्धं सीमन्धरस्वामिस्तवनमाध्यमेन प्राणैषीत् । तस्य च रचनाप्रणाली पठनप्रणाली च द्वे अपि पूर्वतो भिन्ने । तत्र ह्यष्टधा विभक्तेष्वरेषु प्रत्येकं चत्वारश्चत्वारोऽराः सन्ति । मध्येकर्णिकायामष्टाक्षराः, प्रतिचतुररं पद्यमेकमारोहावरोहक्रमेण लिख्यते । एवं कर्णिकागत—'मङ्गलकारि स्तवनम्'—इति वर्णानां पूर्तिः परिधिगतैरक्षरैश्च—श्रीज्ञानसागराचार्यचरणाम्भोजसेवकः । लब्धिसागरनामायं चक्रे सीमन्धरस्तवम् ।। इति पूर्तिर्भवति । अस्य स्तवस्य कमलबन्धानु-

विन्यास-वैशिष्ट्येन पदसंयोजनाया आश्चर्यकारितया वाक्यविच्छित्तेरनुपमतया च पल्लविता पुष्पिता भवति । वैज्ञानिकानामस्तीदं कथनं यत्—

'सामाजिक-महत्त्वोपलब्ध्यै आकर्षणं कुरुताथवा स्वयमाकृष्टा भवत । यथा स्वाकर्षणविधानेन विनाऽणुभ्योऽभिव्यक्तानां पिण्डानामाविर्भावो न भवितुमर्हति, तथैव मानवजीवनस्य विशदाऽभिव्यक्तिरपि विनाऽऽकर्षणमसम्भवा । यथा सङ्गीते तानानां खट्टकानां ग्राम-मूर्च्छनादीनां च प्रयोगश्चमत्कृतये क्रियते तथैव वर्णयोजना-शब्दगुम्फ-वाक्व-विन्यसनादीनामपि साहाय्येन शब्दालङ्कारेषु चमत्कृति-प्रदर्शनप्रवृत्त्या चित्रालङ्कारस्य सृष्टिः सञ्जाता । चित्रालङ्कारस्य माध्यमेन पुरस्कृतानि शब्दचित्राणि काव्यरसिकेभ्यः सूक्ष्मसौन्दर्यप्रतीतिं कारयितुं सहायकानि भवन्ति । सूक्ष्मस्य मानसिकतारतम्यस्य सङ्केतदानायैव वर्णादिचित्राणामाविर्भावः समजायत । स च श्रव्य-दृश्ययोरेकत्रानुभवायाद्भुतरसानुभवाय चालम्भवतीति सामाजिकानामानन्दपरिपोषस्तन्माध्यमेन च नवनवोन्मेषशालिन्याः प्रतिभाया विकासः सुसाध्य एवेति समाजोपयोगित्वमस्य सुसिद्धमेव । अत एवाहं कामये—

वाचां विन्यास-वैचित्र्यं व्यञ्जयन्ती विपश्चिताम् ।
चिरं चित्रीयतां चित्तं चक्रबन्ध-चमत्कृतिः ॥



जयति कविकण्ठहारः श्रीरघुकारः प्रमेयकेदारे ।
यन्मतिदात्रविलूने शिलोञ्छमिव कुर्वते कवयः ॥



डा० जयशङ्कर त्रिपाठी

# संस्कृतस्य गद्यसाहित्यम्



प्राचीनकाले लेखनमुद्रणादीनां सौकर्यं नासीत् अतः साहित्यव्यतिरिक्तविषयाणामपि ग्रन्थानां रचना प्रायेण पद्येनैव भवति स्म यतः पद्यात्मकग्रन्थाः कण्ठस्थं कर्तुं सुगमा भवन्ति । तथापि गद्यात्मिका रचना अपि बाहुल्येन समुपलभ्यन्ते । अस्य कारणमस्ति । महत् चिन्तनं मेधाया उल्बणः श्रमो गद्यमुखेनैव वाचि स्फुरति । अतएव यैः आर्यैः जनपदानाक्रम्य पर्वतान् उल्लंघ्य सुशासनं स्थापितम्, स्वकृष्टिः विस्तारिता, तैर्न केवलं स्तुतिमात्ररचना एव कृता आसन्, गहनं तत्त्वोन्मीलनं, दर्शनं, चिन्तनं च प्रकटितम् । एतत्प्रकटनं गद्यमुखेनैव वेदेषु लौकिकसंस्कृतरचनास्वपि विद्यते ।

गद्यसाहित्यस्य उद्भवश्चिन्तनगोष्ठयाम्, उपनिषदि, यज्ञावसरे वा बभूव । एतस्य गद्यप्रकारस्य महान् विस्तारो यजुर्वेदे, ब्रह्मणेषु, उपनिषत्सु, पातञ्जलमहाभाष्ये च दृश्यते । गद्यसाहित्यस्य द्वितीयो विस्तारो ललितसाहित्यरचनायां विशेषतः कथासु, आख्यायिकासु, उत्कीर्णलेख-चम्पू-नाटकेष्वपि विलसति । संस्कृतगद्यस्य तृतीयः प्रकारो गहनार्थगम्भरीबोधप्रक्रियया सरलपदप्रयोगैश्चापि दर्शनग्रन्थेषु समुज्जृम्भते ।

प्रथमप्रकारस्य संस्कृतगद्यस्य वैशिष्ट्यम्, तस्य प्रकृतं स्वरूपमस्ति, यत्र भाववैदग्ध्यस्य सद्भावेऽपि वाणीवैदग्ध्यं नानुसरन्ति प्रणेतारः । हिन्दी भाषायां 'ठठ गद्य' 'बोलचाल की भाषा' वा इति तस्य सम्यक्पर्यायः सम्भवति । तदनीं गद्यस्य प्रकृतस्वरूप प्रति अभिरुचिः परिस्थितिवातावरणवशात् प्रणेतृणां जायते । यजुर्वेदस्य गद्यं यज्ञावसरस्य रचनास्ति, ब्राह्मणेषु, उपनिषत्सु यद् गद्यं

वर्तते, तद् विद्वद्ब्रह्मगोष्ठी-वार्तालापे समजायत। पातञ्जलमहाभाष्यस्य गद्यं गुरुकुलस्य अध्ययनाध्यापनयोरुत्कृष्टतमम् आदर्शभाषाव्यवहारं प्रस्तौति, इति जानीमः। ब्राह्मणेषु उपनिषत्सु च यद् गद्यं प्रयुक्तमासीत् तयोः पदपदार्थरचनासु च महती समानता लक्ष्यते। ऐतरेयब्राह्मणस्यैतद्गद्यं शौनःशेपाख्यानात् समुद्ध्रियते—

"तस्य पुत्रो जज्ञे रोहितो नाम। तं होवाचाजनि वै ते पुत्रो यजस्व माऽनेनेति। स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशो न्वस्त्वथ त्वा यजा इति। तथेति। स ह निर्दश आस तं होवाच निर्दशो न्वभूद्यजस्व माऽनेनेति। स होवाच यदावै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति, दन्ता न्वस्य जायन्तामथ त्वा यजा इति।" छान्दोग्योपनिषद्-गद्येन सह अस्य निकटतमा समानता दरीदृश्यते।

अत्र छन्दोग्ये जानश्रुतिरैक्वयोः संवादस्यायं प्रसङ्गः तदानीन्तनसंस्कृतगद्यस्य सहजोपस्थितिं वितनुते—

"तं हाभ्युवाद रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायायं ग्रामो यस्मिन्नास्सेऽन्वेव सा भगवः शाधीति ॥४॥ तस्याह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास स तस्मै होवाच ॥५॥"

इत्थमेव सहजः सरलश्च गद्यप्रयोगः पातञ्जलमहाभाष्ये, पुराणेषु, वाल्मीकीये रामायणे, महाभारते च विद्यते।

काव्यवाण्या संश्लिष्टस्य ललितगद्यस्य प्रथमं दर्शनं रुद्रदाम्नो गिरनारशिलालेखे द्वितीयशताब्द्यां भवति। तस्य लेखकः स्वां कृतिं शब्दसमयेनालङ्कृतां स्तौति, यथा—'स्फुट-लघु—मधुर—चित्र—कान्त—शब्दसमयोदारालङ्कृत—गद्य-पद्य (काव्यविधानप्रवीणे) न प्रमाण—मानोन्मान—स्वर—गति—वर्ण्य—सारस्वतादिभिः।' इति अमुमेव शब्दसमयं समनुगृह्य चतुर्थशताब्द्याम् आचार्यदण्डिना स्वकीये 'काव्यादर्शे' काव्यस्य गुणसिद्धान्तं प्रतिष्ठापितवान्। यथा—

'इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः ॥' स दण्डी गद्यकाव्यविषय इदमपि निर्दिष्टवान्, यत्—'ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम् ।'

तदनु समासेन संश्लिष्टं श्लेषालङ्कारेणार्थसम्भृतं, यमकानुप्रासाभ्यां नादयुतं ललितं गद्यकाव्यं रचयन्तोऽनेके प्रणेतारः संस्कृतवाङ्मयं समलङ्चक्रुः । तत्र-दण्डिना विरचितं 'दशकुनारचरितं', सुबन्धो रचना 'वासवदत्ता' बाणभट्टस्य गद्यकृती 'हर्षचरितम्, 'कादम्बरी' च न केवलं संस्कृतवाङ्मयस्य विश्वसाहित्य-स्य अनुपमा रचना वर्तन्ते । अत्र 'दशकुमारचरितस्य' प्रणेताऽयं दण्डी 'काव्या-दर्शस्य' प्रणेतुर्दण्डिनो भिन्नः कश्चिदन्यः । एतेषां समयः पञ्चमशताब्द्या आरभ्य मध्यसप्तमशताब्दीं यावत् स्थिरीभवति । आसु रचनासु नगरानुभूयस्त्वविकटाक्षर-बन्धशब्दलालित्याद् किमप्यन्यत् काव्यसौष्ठवमपि पाठकानां हृदि आह्लादं जनयति । यथा, कथारसस्य अजस्रो निर्वाहः, लोकोत्तरकल्पनाचमत्कारः, प्रकृत-वस्तूनां सजीवस्येवाङ्कनम् । संस्कृतभाषाया गद्यकाव्यस्य अयमेव चरमो विकासकालः । 'गद्यं कवीनां निकषं' यदुक्तं भवति तदपि कविभिः दण्डिसुबन्धु-बाणैः स्वकृतिभिरतिक्रान्तम् । दण्डिनो विरचिते 'दशकुमारचरिते' तदानीन्तन-समाजस्य किमपि पेशलं याथार्थ्यं च वर्णनं निबद्धं जातम् । बाणश्च 'काद-म्बरी'–रचनाकौशलेन कालिदासयशोऽपि आवृणोत् ।

प्रस्तूयत उदाहरणरूपेण कमनीयमेकैकं गद्यखण्डम्, तत्र दशकुमारचरितस्यै-तद् अकालवर्णनम्—

'तेषु जीवत्सु न ववर्ष वर्षाणि द्वादश दशशताक्षः, क्षीणसारं शस्यम्, ओषध्यो बन्ध्याः, न फलवन्तो वनस्पतयः, क्लीबा मेघाः, क्षीणस्रोतसः स्रवन्त्यः, पङ्कशेषाणि पल्वलानि, विरलीभूतं कन्दमूलफलम्, अवहीनाः कथाः, गलिताः कल्याणोत्सवक्रियाः, बहुलीभूतानि तस्करकुलानि, अन्योन्यमभक्षयन् प्रजाः, पर्यलुठन् इतस्ततो बलाकापाण्डुराणि नरशिरःकपालानि, पर्यहिण्डन्तः शुष्काः काकमण्डल्यः, शून्यीभूतानि नगरग्रामखर्पटपुटभेदनादीनि ।' अत्र सरला किन्त्व-र्थसम्भृता पदावली, विषयस्य सजीवं चित्रणञ्च विद्यते ।

सुबन्धोरियं श्लेषयोजना च द्रष्टव्या—

'उपनिषदमिवानन्दमेकमुद्योतयन्तीम्, द्विजकुलस्थितिमिव चारुचरणाम्, विन्ध्यगिरिश्रियमिव सुनितम्बाम्, तारमिव गुरुकलत्रतयोपशोभिताम्, शतकोटि-मुष्टिमिव मुष्टिग्राह्यमध्याम्, प्रियङ्गुश्यामासखीमिव प्रियदर्शनाम्, ब्रह्मदत्तमहि-षीमिव सोमप्रभाम्, दिग्गजकरेणुकामिव अनुपमाम्, रेवामिव नर्मदाम्, वेला-मिव तमालपत्रसाधिताम्, अश्वतरकन्यामिव मदालसां वासवदत्तां ददर्श ।'

अवधारयन्तु च बाणस्येदं वस्तुदर्शनम्, अस्मिन् जाबल्याश्रमो दृग्गोचराय-माणः प्रतिभाति—

'अनतिदूरं गत्वा दिशि दिशि सदासन्निहितकुसुमफलैः ताल-तिलक-तमाल-हिन्ताल-बकुलबहुलैः, एलालताकुलितनारिकेलकलापैः, आलोललोध्रलवली-लवङ्गपल्लवैः अलिकुलझङ्कारमुखरसहकारैः, उत्फुल्लकेतकीकुसुममञ्जरीरजःपुञ्ज-पिञ्जरैः, संसक्तपादपैः काननैरुपगूढम्, परिचितशाखामृगकराकृष्टयष्टिनिष्काश्य-मान-प्रवेश्यमानजरदन्धतापसम्, इभकरभकाद्धोंपभुक्तपतितैः सरस्वतीभुजलता-विगलितैः शङ्खवलयैरिव मृणालशकलैः कल्माषितम्, ऋषिजनार्थमेणकविषाण-शिखरोत्खन्यमानविविधकन्दमूलम्, ऋषिकुमारकाकृष्यमाणवनवराहदंष्ट्रान्त-राल-लग्नशालूकम्, उपजातपरिचयैः कलापिभिः पक्षपुटपवनसन्धुक्ष्यमाण-मुनि-होमहुताशनम्, अविच्छिन्नाज्यधाराहुतिहुतभुग्हुङ्कारमुखरितम्, अदृष्टपूर्वं कलि-कालस्य, उल्लसितधूमकेतुशतमपि प्रशान्तोपद्रवम्, परिपूर्णद्विजपतिमण्डलसनाथ-मपि सदासन्निहिततरुगहनान्धकारम्, अतिरमणीयमपरमिव ब्रह्मलोकमाश्रम-मपश्यम् ।'

बाणभट्टस्य रचनायां तदानीन्तनकलाशिल्पकृष्टीनां चित्राणि प्रत्यक्षायमा-णानि च भवन्ति। बाणभट्टानन्तरमनेके कथा-चम्पू-काव्यप्रणेतारः कवयो बभूवुः, परं न कोऽपि बाणभट्टस्य तुलामेति । शास्त्रीयगद्येषु भगवतः शङ्कराचार्यस्य शरीरकभाष्यस्य गद्यं, जयन्तभट्टस्य न्यायमञ्जर्या गद्यञ्चानुपमे वर्तेते। गद्य-काव्यक्षेत्रेऽपि कस्यचित् दण्डिनोऽ'वन्तिसुन्दरीकथा', धनपालस्य तिलक-मञ्जरी', वादीभस्य 'गद्यचिन्तामणिः', वामनभट्टस्य 'वेमभूपालचरितम्,' सोड्ढ-

लस्य 'उदयसुन्दरीकथा'—रचनाः संस्कृतसाहित्यं चमत्कुर्वन्ति । अन्या अपि उत्कृष्टतमा गद्यरचनाः संस्कृतसाहित्ये बभूवुः, किन्तु तासां नामोल्लेख एवेदानीं वर्तते, कालकवलिताश्च ता आसन् । यथा 'वासवदत्ता' 'सुमुनोत्तरा' 'भैमरथी' इत्येता रचनाः पातञ्जलभाष्ये समुद्धृताः सन्ति । वररुचिकृता 'चारुमती', रोमिल्लसौमिल्लकृता 'शूद्रककथा', श्रीपालकृता 'तरंगवतीकथा' चान्यत्र उल्लिखिता भवन्ति, किन्तु नाद्य प्राप्यन्ते ।

संस्कृतवाङ्मयेऽन्यत् नव्यन्यायदर्शनस्यैवंविधं गद्यं वर्तते, यस्य भाषान्तरं कस्यामपि अन्यस्यां भाषायां भवितुं न युज्यते । यथा—"वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम् ।"

गद्यकाव्यक्षेत्रे च ऊनविंशशताब्द्यां पण्डिताम्बिकादत्तव्यासो बाणभट्टस्य ललितगद्यसरणिं पुनरुज्जीवितवान् । तस्य महती रचना 'शिवराजविजयः' नाम गद्यमहाकाव्यं वर्तते । प्राचीनलक्षणानुसारेण एषा आख्यायिका नाम रचनास्ति । अस्मिन् ग्रन्थे वयं पुनः सानुप्रासं सश्लेषं विकटाक्षरबन्धसमन्वितम्, अजस्रकथारसैः परिपूरितम्, पदस्निग्धम् अर्थविदग्धम् च गद्यमवलोकयामो ह्लादयामश्च । यथा–'एष भगवान् मणिराकाशमण्डलस्य, चक्रवर्ती खेचरचक्रस्य, कुण्डलमाखण्डलदिशः, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीकपटलस्य, शोकविमोकः कोकलोकस्य, अवलम्बो रोलम्बकदम्बस्य, सूत्रधारः सर्वव्यवहारस्य, इनश्च दिनस्य । अयमेवाहोरात्रं जनयति, एनमेवाश्रित्य भवति परमेष्ठिनः परार्द्धसंख्या, असावेव चर्कर्ति, बर्भर्ति, जर्हर्ति च जगत्, वेदा एतस्यैव वन्दिनः ।'

वाक्य-रचनाविन्यासमनुसृत्य गद्यरचनायाः त्रयः प्रकाराः सन्ति—वृत्तगन्धिः, चूर्णकः, उत्कलिका । मुक्तकं नाम अन्यत्प्रकारमपि केचन प्रकल्पयन्ति । तत्र वृत्तगन्धिप्रकारे गद्ये छन्दोलयं छन्दःपदं वा प्रकृत्याऽऽपतति, तेन तस्य गुणप्रकर्षता प्रदीप्यते । चूर्णकस्तु गद्यप्रकारोऽल्पसमासयुतो भवति । उत्कलिकागद्ये

समासस्य बहुलः प्रयोगो जायते। मुक्तक नाम गद्यं सर्वथा समास-रहित भवति।

गद्यकाव्यविवेचनावसरे तस्य भाषाभेदेनापि प्रकारा वर्णिताः सन्ति। किन्तु भेदेष्वेतेषु वस्तुतः कथाकाव्यस्य भेदानां विवेचनं वर्तते, एतत्कार्यं तु पद्येन गद्येन चापि विधाद्वयेन निबद्धं जातम्। एतस्य भेदानां सङ्ख्या अस्य विस्तारं निर्दिशति। ते च भेदा द्रष्टव्याः—आख्यानं, निदर्शनं, प्रवह्लिका, मतल्लिका, मणिकुल्या, परिकथा, खण्डकथा, सकलकथा, उपकथा, बृहत्कथा, कथा, आख्यायिका, चम्पूः च।

आचार्येण दण्डिना गद्यकाव्यविषये प्रथमं व्याख्यानं विहितमासीत्, तत्र इमाः कारिका आचार्यस्य मतम् उपस्थापयन्ति—

अपादः पदसन्तानो गद्यमाख्यायिका कथा।
तत् कथाऽऽख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता।
अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः॥
कथा हि सर्वभाषाभिः संस्कृतेन च बध्यते।
भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्॥
गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते॥

(काव्यादर्शः १।२३,२८,३१,३८)

नाटकरचनायामपि किमपि पेशलं भावविदग्धं च गद्यं भास—कालिदास—शूद्रक—विशाखदत्त—नारायणभट्ट—भवभूति—राजशेखर—वत्सराजप्रभृतिभिर्नाट्यकारैः प्रस्तुतमासीत्। संस्कृतसाहित्यशास्त्रीये विवेचने भाष्ये च प्रयुक्तं गद्यमपि स्वच्छतां प्रौढतां चावहति। तत्रानेकेषु गद्येषु माहेश्वराभिनवगुप्तस्य कृतौ ध्वन्यालोकलोचने, अभिनवभारत्यां चानुपमो गद्यमार्गः प्रवर्तते।

इत्थं संस्कृतगद्यस्य महान् विस्तारो विद्यते। तस्मिन् संस्कृतभाषा संजीवति, पदलालित्यं मनो ह्लादयति, कथा स्वयमेव रसैरार्द्रीभवति।



डा० मातृदत्त त्रिवेदी

# प्रसाद-विरचिता तितली



'प्रसाद' इति कविनाम दधानो जयशङ्करो हिन्दीसाहित्यरङ्गे विविधभूमिकां गृहीत्वाऽवतरति। कविरयं नाटककारोऽयं तथा च उपन्यासकारोऽयं महाकविः काश्यां वैश्यकुले जन्म लब्ध्वा विविधाभिः कृतिभिर्हिन्दीसाहित्यं समृद्धमकरोत् अथ च सरस्वतीसमुपासनया तस्या एव प्रसादेन 'प्रसादो' बभूव इत्यत्र न कश्चिद्विसवादः। अनेन खलु कविना आंसू-लहर-कामायनी प्रभृतीनि काव्यानि, अजातशत्रु-स्कन्दगुप्त-चन्द्रगुप्तादीनि नाटकानि एवञ्च कंकाल-तितलीरावती प्रभृतीः उपन्यासकृतीः रचयित्वा काव्यक्षेत्रे, नाटकक्षेत्रे किञ्चोपन्यासक्षेत्रे यद्विपुलं यशो लब्धं तत्त्वन्येषां कवीनां कृते सर्वथा स्पर्धास्पदम्। उपन्यास इति गद्यसाहित्यस्य कश्चित्स विभागः संस्कृते न विद्यते। 'उपन्यासस्तु वाङ्मुखमिति' वचनोपक्रमे उपन्यासशब्दः कोशेप्रयुक्तः। यद्यपि अन्येष्वपि बहुविधेष्वर्थेषु शब्दोऽयं सस्कृतभाषासाहित्ये प्रयुज्यते परं कुत्रापि यस्मिन्नर्थे हिन्दीभाषायामस्य प्रयोगो भवति तस्मिन्नर्थे न प्रयुज्यते। संस्कृतभाषायां गद्यसाहित्यस्य कथाख्यायिके इति द्वौ भागौ दृश्यते। कथाया रचना गद्यमुपजीव्यैव भवति सरसतापादनात्। उक्तञ्च दर्पणकारेण विश्वनाथेन—"कथायां सरसं वस्तु गद्येनैव विनिर्मितम्"। सेयं कथा सर्वास्वपि हि भाषासु निबद्धा भवितुमर्हति। यथाह दण्डी—

कथा हि सर्वभाषाभिः संस्कृतेन च बध्यते।
भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्॥

यदि पैशाचीप्राकृते 'बृहत्कथे' ति नाम्ना कथोपनिबद्धा भवेत् तदा हिन्दीभाषायामपि सा उपन्यासरूपेण उपनिबद्धुं शक्या। नूनं हिन्दीभाषायां योऽयमुपन्यासभागः स तु कथाकोटिमेवाधिरोहति। कथा उपन्यासस्य भित्तिस्थानीया।

अतिविस्तीर्णमस्ति उपन्याससाहित्यं हिन्दीभाषायाम् । तत्र ये लब्धकीर्तय उपन्यासकर्त्तारस्तेषां मध्ये जयशङ्करप्रसादो मुख्यतम इति मन्यामहे वयम् । अनेन खलु तिस्रः कंकाल-तितली-इरावती प्रभृतय उपन्यासकृतयः कालक्रमेण निर्मिताः । तत्र आद्ये द्वे सम्पूर्णे अन्तिमा चेरावती असम्पूर्णा । आदौ तावत् प्रसादेन कंकालाख्यमुपन्यासं निर्माय तदनन्तरं 'तितली' इत्युपन्यासस्य निर्माणं कृतम् । कंकालाद्भिन्नमेव कथावस्तु प्रसादेन अस्मिन्नुपन्यासग्रन्थे निबद्धम् । कंकालस्तु प्राथमिकी रचना । अतोऽत्र प्रसादस्यौपन्यासिकी कला वृद्धिं गता न दृश्यते । तस्याः क्रमशो विकासः तितलीनिर्मितौ एव द्रष्टुं शक्यः । उपन्यासग्रन्थोऽयं चतुर्षु खण्डेषु संविभक्तः । तत्र प्रथमे खण्डे सर्वेषां मुख्यपात्राणां परिचयः । द्वितीये खण्डे कथाया विकासो भवति—शैला हिन्दूधर्मे दीक्षिता भवति तथा च तितलीमधुवनौ ये कथायाः नायकनायिके स्तः ते परस्परं प्रणयसूत्रे निबद्धे भवतः । पुनश्च तृतीये खण्डे कथा पूर्वापेक्षया द्रुतगत्या विकसति । अन्तिमे चतुर्थखण्डे पैशाचिकवृत्तीनि पात्राणि समाविशन्ति । परमन्ते कथा सुखावसानैव भवति ।

एवं चतुर्ष्वपि खण्डेषु सर्वत्र ग्राम्यजीवनस्यैव यथार्थं चित्रणं कृतं प्रसादेन । यत्किमपि दौर्बल्यं भारतीयग्राम्यजीवने वर्तते तदपि उपन्यासकारेण स्वाभाविकरीत्या उपदर्शितम् । उपन्यासस्य घटनास्थली धामपुरग्रामस्य काचिद् भूमिर्या 'वंजरियेति' कथ्यते तत्रत्यैः जनैः । तत्रैव रामनाथनाम्नः कस्यचन वृद्धजनस्य सविधे निवसति काचन अनाथकन्या या 'वंजो' इति कथ्यते सैव कालान्तरं 'तितली' ति नाम्ना प्रसिद्धाऽभूत् । तत्रै च 'मधुवा' नामधेयः कश्चन असहायः बालोऽपि निवसति यः पश्चात् 'मधुवन' इति नाम्ना व्यपदिष्टः । तितली मधुवनौ एव कलान्तरे रामनाथस्य प्रयासेन वैवाहिकप्रणयसूत्रे बद्धौ उपन्यासस्य अस्य नायकनायिके भवतः । धामपुरग्रामं निकषा निवसति कश्चित्सामन्तः इन्द्रदेवो नाम, य आङ्लदेशात् शैलानाम्नीं काञ्चन युवतीमादाय अत्र समागतः । गतेषु केषुचिद्दिनेषु तयोर्मध्ये पूर्ववत्सौमनस्यं न दृष्टम् । अतः इन्द्रदेवः स्वगृहं परित्यज्य काशीं गतः, परं इन्द्रदेवस्य माता श्यामदुलारी उत्तराधिकार-

प्रसंगेन शैलामादाय इन्द्रदेवं प्रति गता। एवं शैलेन्द्रदेवौ पुनः सम्मिलितौ बभूवतुः।

अन्यत्र मधुवनस्य जीवनं कालगत्या विपद्ग्रस्तं बभूव। विधेर्दुर्विलसितात् स चौरकर्मणा सापराधोऽभूत्। अतः स्ववसतिं परित्यज्य स कलिकातानगरं समायातः, परं तत्रापि राजपुरुषैर्गृहीतः कारागारे निक्षिप्तः। तत्र दशवर्षपर्यन्तं कारागारमुषित्वा पुनस्तस्मात् मुक्तिमवाप्य स स्ववासभूमिमागतो वियोगविधुरां तितलीञ्च समनन्दयत्।

एष उपन्यासस्य संक्षेपेण परिचयः। अस्मिन्नुपन्यासग्रन्थे विविधसामाजिकवर्गाणां यथार्थ चित्रणं कृतम्। अत्र सामन्तीय-व्यवस्थाया अधःपतनं ग्राम्यजीवनस्यातिदैन्यमथ च परस्परं कलहेन परिवारविघटनमित्येतत्सर्वं तितलीग्रन्थे सुष्ठु वर्णितम्। यदप्यत्र तितली-मधुवनयोः शैलेन्द्रदेवयोश्च द्वे कथे उपनिबद्धे परं तयोर्मध्ये बहूनि पत्राणि तेषां जीवनवृत्तानि च समापतन्ति। प्रसादस्य कंकालोपन्यासो घटनाप्रधानः परं तितली कथाप्रधाना। या साधारणवर्गस्य बाला सैवात्र नायिकारूपेणावतीर्णा।

अस्मिन्नुपन्यासग्रन्थे प्रसादस्य हृदये या नारीविषयिणी कमनीया भावना सैवात्र मूर्तिमती तितली इति कृत्वा उपन्यासेऽवतीर्णा न केवलमत्रैव परं सर्वास्वपि कृतिषु कविना नारीरूपस्य शोभनं मधुरञ्चवर्णनं कृतम्। कामायनीकाव्ये कविना यदुक्तं नारीविषये तत्सर्वत्र कवेरस्यादर्शभूतम्—

नारी तुम केवल श्रद्धा हो
विश्वासरजतनग पगतल में।
पीयूषस्रोत सी बहा करो
जीवन के सुन्दर समतल में।।

अत्र तितली-मधुवनयोः शैलेन्द्रदेवयोश्च यत्सुखदं दाम्पत्यं तत्र पुरुषापेक्षया नारीणामेव समधिकं महत्त्वं वर्तते। प्रेममयी तितली दाम्पत्यजीवने कष्टोत्पीडनादिझंझावातैः बाधिताऽपि स्थिरतया संयोगकालस्य मधुरां स्मृतिं हृदिनिधाय

यावज्जीवं मधुवनमेव प्रतीक्षते। अन्ततो दशवर्षाणि यावत्तपः कुर्वती सा मधुवनमवाप्नोति। एवं विविधपात्राणां समावेशेऽपि नारीरूपस्यैव महिमा वितन्यते प्रसादेन। नारीरूपस्य या लज्जाशीलता तस्या वर्णने प्रसादस्तु सर्वेषां मूर्धन्यः। यथा च शैलायाः स्वभाविकवर्णने कविः कथयति—

"शैला ने अपनी भोली आँखों को एक बार उठाया, सामने से सूर्योदय की पीली किरणों ने उन्हें धक्का दिया, वे फिर झुक गई"।

एवं सर्वत्र नारीरूपस्य प्रसादेनाद्वितीयं दिव्यं चित्रणं कृतम्।

(आकाशवाण्याः सौजन्यात्)



अनुद्घुष्टः शब्दैरथ च घटनातः स्फुटरसः
पदानामर्थात्मा रमयति न तूत्तानितरसः।
यथा किञ्चित्किञ्चित्पवनचलचीनांशुकतया
स्तनाभोगः स्त्रीणां हरति न तथोन्मुद्रिततनुः॥

—वल्लणस्य



# ग्रन्थ-समीक्षा

मिथ्याभेदी

संस्कृतबालबोधिनी—प्रथमभागः—लेखकः, विद्यावारिधिः, महामहोपाध्यायः काशीकृष्णाचार्यः, डि० लिट्०। प्रकाशकः—पञ्चाक्षरी मुद्राशाला, अरण्डलपेटा, गुण्टूरुनगरी, आन्ध्रप्रदेशः। मूल्यम्—रूप्यकमेकम्।

अयं ग्रन्थो न केवलं संस्कृतभाषाप्रचाराय प्रयत्नं विहितवान्, हिन्दीभाषाप्रचारमपि अनयैव सरण्या सहजं कृतवान्। अस्मिन् सप्तत्रिंशद्भिः पाठैः संज्ञा-सर्वनाम-क्रिया-कालानां रूपज्ञानं प्रयोगसरणिं च संस्कृतभाषाप्रवेशोपयोगित्वेन प्रस्तूयेते। ग्रन्थकर्त्ताऽत्र हिन्दीभाषायां तेलुगुभाषायां तथा च नागरीतेलुगुलिप्योश्च समानरूपेण पाठान् अलिखत्। तेन संस्कृतमाध्यमेन तेलुगुभाषिणां मध्ये हिन्दीभाषायाः प्रचारस्य मार्गः सुकरो भवति। इत्थमिदं कार्यं राष्ट्रहिताय प्रयतते। पीठिकायां लेखकेन स्पष्टीकृतमिदमुद्देश्यम्—"अद्यत्वे पुनस्स्वतन्त्रभारते विद्यार्थिभिरवश्यपठनीयतया हिन्दीभाषा सामादेश्यमानापि तत्तत्प्रान्तीयभाषा-परिशुद्धिपौष्कल्या सम्पादनायादौ गीर्वाणभाषाध्ययनमावश्यकमिति निश्चित्य तत्प्रचाराय तत्प्रबोधाय च महान् प्रयत्नः क्रियते प्राज्ञैरनुभवज्ञैर्देशनायकराष्ट्रपति-प्रभृतिभिराधिकारिकैः प्राचीनभारतीयसंस्कृतिपुनःप्रतिष्ठाकांक्षिभिः। अतएवैतैस्सर्वेष्वपि विश्वविद्यालयेषु गीर्वाणवाणीमहापठीश्च प्रतिष्ठापितः। अपि चाचिरमनायासेन गीर्वाणभाषाज्ञानं सम्पादयितुमस्मद्बालबोधिनी तावत्तैरेवोद्घुष्य प्रकीर्तिता। अनेनैव कारणेन सर्वेषां भारतीयानामुपयोगार्थं मुद्रापितेयमिदानीं देवनागरमुद्राक्षरैः। संस्कृतपदवाक्यानामर्थविवरणं चान्ध्रहिन्दीभाषयोरुपचितं तत्तन्मुद्राक्षरैरेव।"

पाठानां चयनविधौ पदपदार्थविज्ञानं सारल्यञ्च सम्यगरक्षत् तत्र लेखकः। येन संस्कृतभाषायां प्रवेशं लब्धुकामानां रुचिः प्रवर्धते, काठिन्यं दृष्ट्वा न च विरमति। नित्यं व्यवहारे समुपयोगिनः शब्दा बाहुल्येनात्र प्रयोगेषु गृहीताः सन्ति। ग्रन्थान्ते पुनरेतादृशानां शब्दानां सूची तिसृषु भाषासु अकारादिक्रमेण निबद्धास्ति।

महामहोपाध्यायकाशीकृष्णाचार्यमहोदयस्य स्तुत्योऽयं प्रयासः संस्कृतानुरागिभिर्हिन्दीप्रचारे रुचिः दधद्भिः सर्वथाऽभिनन्दार्हः। निष्कामभावेन कृतानि एतादृशानि एव कार्याणि भाषाविवादं शमयन्ति, इति विश्वसिमः।

चन्द्रकला नाटिका—प्रणेता—आचार्यविश्वनाथः सम्पादकः, श्री प्रभातशास्त्री, संस्कृतहिन्दीव्याख्यातारौ श्री तारिणीश झा, श्री शिवशङ्कर त्रिपाठी। प्रकाशकः—देवभाषाप्रकाशनम्, दारागंज, इलाहाबादः। प्रथमं संस्करणम्। मूल्यम्, रूप्यकाणि ४·००।

'साहित्यदर्पण' ग्रन्थस्य प्रणेता महान् आलङ्कारिकः सान्धिविग्रहिको विश्वनाथः संस्कृतानुरागिभिः सम्यग् विदितोऽस्ति। अनेनैव 'चन्द्रकला' नाम नाटिकाऽपि प्रणीता। अस्य उल्लेखः 'साहित्यदर्पणे'ऽपि तेन कृतः। रूपकस्य नाटिकाप्रकारे 'रत्नावली' नाटिकामनु एषाऽनुपमा कृतिर्वर्तते नात्र सन्देहावसरः। अस्यां नृपचित्ररथदेवचन्द्रकलयोः प्रणयपरिणयोः कथा भावसम्भृताभिः मनोहराभिः पदावलीभिः निबद्धा जाता। तत्र नाट्यनियमानां सम्यङ् निर्वाहोऽपि अस्मान् आकर्षयति। प्रस्तावनायां विश्वनाथेन यदुक्तं भवति—'नाट्यवेददीक्षागुरोः गौरवैकबान्धवस्य गजपतिमहाराज्यसान्धिविग्रहिकश्रीविश्वनाथकविराजस्य।' तत् कृतौ सत्यं प्रतिभाति। साहित्ये रुचिं कुर्वद्भिः गीयमानं 'लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्' नाम प्रसिद्धं छन्दोऽस्यां नाटिकायामेव वर्तते।

नाटिकायाश्चेदं सुसम्पादितं संस्करणमभावमेकं निराकरोत्। अस्मिन् संस्करणे संस्कृतव्याख्या, सुबोधं हिन्दीभाषान्तरं च विद्येते। विस्तृतभूमिकाऽपि संलग्नास्ति, तत्र विश्वनाथस्य स्थितिकालः, चन्द्रकलानाटिकायाश्च रचनाकालः सम्यङ् निरूपितौ भवतः। विश्वनाथस्य पितृपितामहावपि एतेषामाश्रयदातारः

कलिंगशासका बभूवुः। संस्कृतस्य आलङ्कारिकवाङ्मयेऽद्वितीया एषाऽऽचार्य-परम्परा। विश्वनाथस्तु अष्टादशभाषायां रचनाप्रवीणो बभूव। अस्य साहित्य-दर्पणनामा आलङ्कारिकग्रन्थः कियतीं ख्यातिं नाजगाम। अत्र भूमिकालेखकः साहित्यदर्पणस्य रचनासमयनिर्धारणे परम्परापतितां भ्रान्तिं निराकृतवान्, तथा च प्रमाणपुरस्सरं तेन आकलितं यत् साहित्यदर्पणस्य रचना १४०० ईस्वीवत्सरात् प्राक् १३८०—१४०० ईस्वीवत्सरेषु मध्ये बभूव। देवभाषाप्रकाशनस्य स्तुत्योऽयं प्रयासः, संस्कृतपाठकानां शोधार्थिनाञ्च अनुरञ्जनं करिष्यति, इति मन्यामहे।

●

●

तातः सृष्टिमपूर्ववस्तुविषयामेकोऽत्र निर्व्यूढवान्
निष्णातः कविकुञ्जरेन्द्रचरिते मार्गे गिरां वागुरः।
रेवाविन्ध्यपुलीन्द्रपामरवधूझञ्झानिलप्रेषित—
प्रायेऽर्थे वचनानि पल्लवयितुं जानाति योगेश्वरः॥

—अभिनन्दस्य

●

श्री प्रभात मिश्रः

## हन्त सखि रे ! किं कृतम्



रहसि सा सा जल्पना,
सम्प्रति तदीया कल्पना,
दलति मम हृदयं हृतम्,
हन्त ! सखि रे ! किं कृतम् ?



नैव पार्श्वे साऽद्य वीणा,
भावना क्षीणा विलीना,
मनसि निहितं विस्मृतम्,
हन्त ! सखि रे ! किं कृतम् ?



यामि कल्लोलिनीकूले,
उपविश्य तटरुहमञ्जुमूले,
विदधामि तत् मरण[illegible]व्रतम्,
हन्त ! सखि रे ! किं कृतम ?



डा० मञ्जुलमयङ्क पन्तुलः,

# स्कन्दस्वामिनैकं ब्राह्मणभाष्यमपि व्यरचि किम् ?

●

स्कन्दस्वामिनः ऋग्वेदभाष्यानुशीलनेन अवगम्यते यत्तेन ऐतरेयब्राह्मणस्यापि भाष्यं व्यरचि । एतदुपपत्तिसमर्थको यद्यपि कोऽपि हस्तलिखितो ग्रन्थोऽस्माभिर्नासादितः नापि वा दृष्टः तथापि मध्येभाष्यम् ईदृशानि वाक्यानि लभ्यन्ते, यैः सम्भावनेयमर्थवती जायते । एवन्तु ऐतरेयब्राह्मणस्य प्रामाणिकत्वेनोपन्यासः भाष्यकारेण अधिभाष्यं प्रायः सर्वत्रैव कृतः किन्तु एकेषुचित् स्थलेषु विशेष एष उपन्यासप्रकारः । पूर्वन्तावत्, कानिचित् तानि स्थलानि उद्ध्रियन्ते, यत्र ऐतरेयोपन्यासः विनैव केनापि विशेषणेन दृष्टिपथमायाति । तद्यथा, ऋग्वेदस्य प्रथममण्डलान्तर्गतानां द्वाविंशतिचतुर्विंशतिसप्तविंशतिसूक्तानां क्रमशः, षष्ठ्यां, प्रथमायां, दशम्यां, त्रयोदश्यां चर्चि, "अद्भ्यो वा एष प्रातरुदेति, आपः सायं प्रविशति इति श्रुतेः," ब्राह्मणेनोक्तमपीतिहासं संक्षिप्यते," "अग्निः स्तूयमानः शुनःशेपमुवाच," "विश्वान्नु देवान् स्तुहि" इत्येवमादीनि उद्धरणानि सन्त्यपि ऐतरेयब्राह्मणाय, निर्विशेषणमुल्लिख्यन्ते । किन्तु एकेषुचित्स्थलेषु विशेषकास्मदीयपदसहितानि उद्धरणानि साभिप्रायाणीति लक्ष्यन्ते । यथा, "अश्व्यो वारो अभवस्तदिन्द्र" इति ऋग्वेदीयप्रथममण्डलस्थद्वात्रिंशत्तमसूक्तस्य द्वादश्याः ऋचो व्याख्याने ऐतरेयब्राह्मणस्योल्लेखः **"इत्यस्मदीये हि ऐतरेयब्राह्मणे"** तथा च "प्रैतु ब्राह्मणस्पतिः प्रदेव्ये तु सूनृता" इति तत्रैव चत्वारिंशत्तमसूक्तस्थतृतीयाया वाचो व्याख्याने "एताश्च यो वै यज्ञं हविष्यंधितं वेद **इत्युपक्रम्य ऐतरेयब्राह्मणे दर्शिताः"** सविशेषणम् । अत्रैव प्रासंगिकमिदमपि उपादीयतां यद्भाष्ये ऐतरेयेतरब्राह्मणानामुल्लेखः तत्तद्ब्राह्मणसंज्ञाविशेषपुरस्सरं क्रियते, यथा, **शांखायना** इतिहासब्राह्मणमधीयते, अत्र च **शांखायना** इतिहासमाचक्षते, एवं हि **शांखायनानां** ब्राह्मणे समाम्नातम्, तथा हि **तैत्तिरी-**

याणां वचनम्, एवं हि छागलेयिनां श्रुतौ, अत्र छन्दोगब्राह्मणानामितिहास-माचक्षते, इत्यादिदृशा क्रियते। एवन्तर्हि साशयस्य अस्मदीयपदस्य तथा च "इत्युपक्रम्य ऐतरेयब्राह्मणे दर्शिताः" इतिवाक्यस्य को न्वर्थः संभाव्यते ! यतो हि अस्मदीयपदनिष्ठात्मीयतातिशयतया, इदं स्वशाखीयमध्येयब्राह्मणमित्यप्यर्थः प्रतिपत्तुं शक्यते। इममेव पक्षमाश्रित्य मया "स्कन्दस्वामी तदीयम्प्रथमाष्टकमितऋग्वेदभाष्यञ्चे" ति प्रबन्धे स्कन्दस्वामिनः स्वशाखीयं ब्राह्मणमैतरेयमिति उपपादितम्। द्वितीये च वाक्ये निर्दिष्टकर्त्रपेक्षया, कर्तृत्वेन "मया, ऐतरेयब्राह्मणकृता वा" द्वयमपि युज्यते। अर्थात् एकत्र प्रयुक्तस्य अस्मच्छब्दस्यानुवृत्त्या, "अस्माभिः मया वा ऐतरेयब्राह्मणे उपक्रम्य दर्शिताः" इत्येषोऽप्यर्थः ग्रहीतुं शक्यते। तथैव अस्मदीये हि ब्राह्मणे प्रभृतिवाक्यस्य मया विरचिते ऐतरेयब्राह्मणे, ब्राह्मणरचनाया असम्भवतया, तदधिकृत्य लिखिते भाष्ये, इत्यप्यर्थः प्रतिपत्तुं शक्यते। उपपन्नश्चास्याः सर्वसमर्थकं प्रमाणं, स्कन्दस्वामिनः शिष्यस्य हरिस्वामिनः शतपथब्राह्मणभाष्योपलब्धेषु प्रास्ताविक-पद्येष्वन्यतमं पद्यं, यत्रोपलभ्यमानस्य कृतवानिति पदस्य ऋक्श्रुतिम् उत सप्तसोमसंस्था इति पदद्वयेनापि युगपदन्वयो घटते। अर्थात्

> यः सम्राट् कृतवान् सप्तसोमसंस्थास्तथर्क्श्रुतिम्।
> व्याख्यां कृत्वाऽध्यापयन्मां श्रीस्कन्दस्वाम्यस्ति मे गुरुः॥

यः सप्तसोमसंस्थाः कृतवान् तथा च यः ऋक्श्रुतिं कृतवान् इति। कृता ऋक्श्रुतिः, ऋग्वेदभाष्यरूपेण अद्यत्वे यथाकथमपि उपलब्धा किन्तु सप्तसोमसंस्था-कृतिः (ऐतरेयब्राह्मणम्) अद्यापि अनुपलब्धा सप्तसोमसंस्थायाः, ऋक्श्रुतेश्च, स्कन्दस्वामिसकाशादध्ययनं, "व्याख्यां कृत्वाऽध्यापयन्मां" प्रभृति तृतीयपादेन अतितरां स्फुटं व्यज्यते। तदन्वयदिशा, यः सप्तसोमसंस्थाः ऋक्श्रुतिञ्च कृतवान् तथा च सप्तसोमसंस्थाः ऋक्श्रुतिञ्च व्याख्यां कृत्वा मामध्यापयदित्यर्थ-गतेरुपपन्नत्वात्, अस्मदीयाः पूर्वोद्धृताः शब्दाः स्कन्दस्वामिन ऐतरेयब्राह्मण-भाष्यकर्तृत्वमुपपादयन्ति।

•

वैद्य रामस्वरूपशास्त्री

# इदानीं वेदविज्ञानमावश्यकम्



विदन्ति जानन्ति विधेयान् धर्मार्थकाममोक्षान् विद्याः कलाः ज्ञानानि विज्ञानानि च येन जनाः स वेदः, ज्ञानम् । ज्ञानार्थात् विद्धातोरच्प्रत्यये रूपमिदम् । वेदशब्दस्य ज्ञानार्थकत्वमुपपादयति कृष्णयजुर्वेदीयभाष्यभूमिकायां श्रीसायणाचार्यः—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।

ज्ञानमिह नेत्रम्, देहिनां परमावश्यकं चेति सर्वेषां द्रव्याणां पदार्थानां गुणानां कर्मणां च ज्ञानाय परिज्ञानाय चापि सन्तीह स्वाभाविक्यः प्रवृत्तयो जनानाम् । पुरा जगदुत्पादनसमकालमेव विश्वस्य कर्त्ता लीलाविहारी परमेश्वरो जीवान् निर्माय तेभ्यो ज्ञानं ददौ । देहिनां देहेषु स ज्ञानाधिष्ठानानि पञ्चज्ञानेन्द्रियाणि च प्रत्यतिष्ठिपत् । ततश्च तेषां तत्र कर्मेन्द्रियाणि निर्माय कर्माधिकारं व्यजिज्ञपत् प्रभुरीश्वरः । तस्य निःश्वासो वेदाः महर्षीणां मनःसु परमेश्वरस्येच्छया ज्ञानमाविरकुर्वन् । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति चत्वारः सन्ति वेदाः । आम्नायः आगमः श्रुतिः इति वेदस्य पर्यायवचनानि । वेदा हि अपौरुषेयाः शाश्वताः निःशेषज्ञाननिधानानि च । सर्वज्ञानमया वेदाः । सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम् । नेह ज्ञानं विना कस्यापि कर्मप्रवृत्तिः नापि च कर्मसम्पादनं सम्भवति । यो जनः यत्कर्म कर्त्तुं जानाति स एव तत्सम्पादयितुं क्षमते, अन्यस्तु न क्षमः इति प्रतिनिवर्तते कार्यसम्पत्तेः । ज्ञानं हि कर्मसु प्रवर्तकं जनानाम् ।

वेदेषु जगतां व्यवस्थार्यं मानुषाणां कल्याणाय च—ब्राह्मणः क्षत्रियः वैश्यः शूद्रः दस्युश्चेति पञ्चभेदाः प्रतिपादिताः मानुषाणाम् । त एव पश्चाज्जातिरूपेण व्यवहारमवाप्नुवन् । वेदेषु वर्णाः, कार्यविभागाय कृताः, न तूच्चनीचभेदाय, इति जातिभेदमविहाय मानुषा मिथः स्नेहेन वर्तेरन्निति वेदोपदेशः—

प्रियं मा कृणु देवेषु प्रिय राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ।।

(अथर्व०)

पुरातनेषु युगेषु वेदाध्ययनमेव मुख्यमध्ययनमासीदार्याणाम् । महर्षयो वेदान् अधीत्य लोके ज्ञानस्य प्रचारमकुर्वन् । वेदेषु ब्राह्मणक्षत्रियवैश्यशूद्राणामवर्णानां च कर्त्तव्यानि, धर्मार्थकाममोक्षाणां पुरुषार्थानामुद्देश्यानि, ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासानामाश्रमाणां च व्यवस्थाः, मानुषाणां कल्याणार्थाय पदे पदे वर्णिताः सन्ति । तत्र विद्यानां कलानां यन्त्राणां ज्ञानानां विज्ञानानां च सर्वविधानां वर्तते स्थाने स्थाने वर्णनम् । तत्र जगतः उत्पत्तिः स्थितिः लयश्च वर्णिताः सन्ति । तत्र मानुषाणां भद्राणि कर्त्तव्यानि, हेयानि कार्याणि, लोकव्यवहारा जीवनोपाया देवोपासना मिथः पूजाश्च बहुत्र वर्णिताः सन्ति । सर्वं ज्ञातव्यमशेषं कर्त्तव्यं च वर्तते वेदेषु लिखितम् । पुनर्जन्मापि वेदेषु प्रतिपादितं वर्तते—

यो धर्माणि प्रथमः ससाद
ततो वपूंषि कुरुते पुरूणि ।
धास्युर्योनिं प्रथम आविवेश
यो वाचमनुदितां चिकेत ।।

(अथर्व०)

विश्वमिदं वेदेषु राष्ट्रमेकं वर्णितम् । राष्ट्रस्य च तस्य रक्षा कल्याणं च तत्र पदे पदे वर्तते प्रार्थितम् ।

ध्रुवं ते राजा वरुणो
ध्रुवं देवो बृहस्पतिः ।
ध्रुवं त इन्द्रश्चाग्निश्च
राष्ट्रं धारयतां ध्रुवम् ॥
भद्रमिच्छन्त ऋषयः
स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे ।
ततो राष्ट्रं बलमोजश्च जातं
तदस्मै देवा उपसंनमन्तु ।
(अथर्व०)

वेदेषु मानवानां कल्याणाय सन्ति देवप्रार्थनाः, मानवजीवने समापतितानां विघ्नानां निवारणोपायाश्च तत्र विज्ञानविषयः यज्ञविधानानि, काम्यकर्मप्रकारास्तेषां साधनोपायाश्च प्रतिपादिताः सन्ति । येषामनुष्ठानेन मानवः सर्वकामानवाप्नोति ।

पुरातना महर्षयो वेदानधीत्य सर्वज्ञकल्पा अभवन् । ततश्च कालक्रमेण भूयो भूयो ज्ञानस्य ह्रासाः प्रारभन्त । मानुषा अल्पबुद्धयः समजायन्त । तेषां च कृते महर्षिवेदव्यासोऽन्ये चर्षयो विविधानि सरलानि शास्त्राणि लिलिखुः । येषां चाल्पबुद्धीनां जनानां वेदेषु गतिर्नासीत् ते द्विजेतरजातयः शास्त्राणि तानि तानि पुराणानि चाधीत्य ज्ञानमुपार्जयन् ।

चतुर्षु वेदेष्वधीतिनो द्विजाश्चतुर्वेदाः, त्रिषु वेदेषूपपन्ननैपुणाः त्रिवेदिनः, द्वयोः वेदयोरधीतिनो द्विजवरा द्विवेदिनश्चेदानीमपि नाम्ना प्रसिद्धाः सन्ति । भारते वैदेशिकानामाप्रवेशादतिमहती हानिरजायत भारतीयायाः संस्कृतेः । स्वतन्त्रे भारते पुनरिदानीमार्यसनातनवैदिकधर्मानुयायिनो भारतीया वेदाध्ययनशीला भवेयुः । भारते लब्धप्रवेशा वैदेशिका आङ्ग्लाः शर्मण्याश्च वेदानधीत्य वैज्ञानिकाः समवर्तन्त । इदानीन्ते ज्ञानिनो बलवन्तो धनिनो यशस्विनश्च सन्तीति तेषां वेदाध्ययनस्य फलम् ।

ज्ञातात्मानो वेदाधीतिनः पूर्वजा अस्माकं दीर्घायुषो ज्ञानिनो बलवन्तो वैज्ञानिका धनिनो मनस्विनो यशस्विनश्चासन् । पदार्थवैज्ञानिके युगेऽस्मिन् अस्माभिरपि पुनर्वेदानां शास्त्राणां च गाढं ज्ञानं सम्पादनीयम् । मानवजीवने परमोपयोगिज्ञाननिधानानां वेदानामध्ययनमिदानीन्तने युगे लोकान् चमत्कार-चकितान् कर्त्तुं स्वप्रसिद्धये स्वदेशप्रतिष्ठार्थं चातीवावश्यकम् । सोपपत्तिकं वेदानां ज्ञानमपेक्ष्यतेऽधुना । केवलं भौतिका वैज्ञानिकाः पाश्चात्त्या विजेतव्या अस्माभिः । वेदानां सार्थकमध्ययनं बहूपकरिष्यति जनानाम् । यो जनो वेदान् वेदाङ्गानि च सम्यक् जानाति स सर्वज्ञकल्पः सञ्जायते, लभते च लोकेषु पूजास्थानम् ।

वेदा हि ज्ञानविज्ञानविद्यानां निधयो मताः ।<br>
तानधीत्य च मेधावी सर्वज्ञत्वाय कल्पते ॥



## सम्भाव्यः, शक्तः

निर्धनको धनवानुत तुल्यं सम्भाव्यः<br>
निर्बलको बलवानुत तुल्यं सम्भाव्यः ।<br>
सर्वसम्मतो धर्मो नित्यं निगदति नः<br>
कीदृगपि स्याज्जनः स तुल्यं सम्भाव्यः ।

विषं दातुं न शक्तस्त्वं, सुधां पातुं न शक्तोऽहम्<br>
त्वयाऽहं तत्र किं जनितो, यत्र नो जीवितुं शक्तः ।<br>
विवशता नो ममैवास्मिन्, विवशता वर्तते तेऽपि<br>
न यावच्चेतनं कश्चिद् व्रणं मे सेवितुं शक्तः ॥

—डा० हरिदत्त पालीवालः 'निर्भयः'



श्री कमलापति मिश्रः

# ग्रन्थिः



( राष्ट्रभाषाहिन्द्यां कविवर्यस्य डा० श्रीसुमित्रानन्दनपन्त महोदयस्य ग्रन्थि-नाम खण्डकाव्यमस्ति, तथ्यैकांशस्य संस्कृतभाषान्तरं प्रस्तौति श्रीकमलापतिमिश्रः)



वह मधुर मधुमास था, जब गन्ध से
मुग्ध होकर झूमते थे मधुप-दल,
रसिक-पिक से सरस तरुण-रसाल थे,
अवनि के सुख बढ़ रहे थे दिवस-से।
जानकर ऋतुराज का नव-आगमन
अखिल कोमल-कामनाएँ अवनि की
खिल उठी थीं मृदुल-सुमनों में कई
सफल होने को अवनि के ईश से।

मधुमासो ननु मधुरः,
आसीद्गन्धान्धमधुपदलयुक्तः।
तरुणरसालः सरसो,
रसिकपिकैः सर्वथैव संयुक्तः॥
ऋतुराजस्यागमनं,
नवमवगत्यातिकोमला ह्यखिलाः।
पूर्ण विकासमापुः फलाय भूमेः सुकामना ईशात्॥

रुचिरतर निज कनक-किरणों को तपन
चरम-गिरि को खींचता था कृपण-सा,
अरुण-आभा में रँगा था वह पतन
रज-कणों-की वासनाओं से विपुल।
अचिरता से सहज आभूषित हुई
कीर्ति कितनी है नहीं छिपतीं अहा!
सान्ध्य-महिमा-सी, प्रभा-अवसान से,
वाम-वर्धित अल्पता में, तिमिर में।

तपनः कानककिरणान्,
रुचिरान् स्वीयांश्चकर्ष चरमाद्रौ।
कृपण इवाभूत्पतनम्,
नन्वरुणाभं प्रवासनाक्तमिव तु रजः॥
सहजा विभूषितापि च,
कीर्तिरचिरमेति नावृतिं प्रचुरा।
महिमा हि यथा सान्ध्यः, प्रभावसानाल्पतिमिरतो नैव॥

तरणि के ही सङ्ग तरल-तरङ्ग से
तरणि डूबी थी हमारी ताल में,
सान्ध्य-निःस्वन-से गहन जल-गर्भ में
था हमारा विश्वतन्मय हो गया।
बुद्बुदे जिन चपल-लहरों में प्रथम
गा रहे थे राग जीवन का अचिर,
अल्प पल, उनके प्रबल उत्थान में
हृदय की लहरें हमारी सो गईं।

तरलतरङ्गात्तरणी,
तरणिश्च सहैव गहनजडगर्भे,
अभवत् सान्ध्यविनिःस्वन–
जडाशये तन्मयं न्वखिलविश्वम् ।
जीवनरागमगायं–
श्चपलतरङ्गेऽथ बुद्बुदा यत्र ।
तत्प्रबलाल्पोत्थाने, हृल्लहरी मे जगाम ननु सुप्तिम् ।।

जब विमूर्छित-नींद से मैं था जगा
(कौन जाने, किस तरह ?) पीयूष-सा
एक कोमल समव्यथित-निःश्वास था
पुनर्जीवन-सा मुझे तब दे रहा।
मधुप-बाला का मधुर मधु-मुग्ध-राग
पद्म-दल में सम्पुटित था हो चुका,
काम्य-उपवन में प्रथम जब था खिला
प्रणय-पद्म कुमुद-कली के साथ ही।

मूर्च्छाप्रायविनिद्रातो—
जागरणे न मेऽस्ति विज्ञानम् ।
कः कोमलनिःश्वासो,
जीवनदोऽभूत् यथा हि पीयूषम् ।।
मधुमुग्धो ननु रागो,
मधुरो मधुपानुगामिबालायाः ।
पद्मदले सम्पुटितो,
जातो ह्यासीत् तदा यदातितराम् ।
काम्योपवने प्रथमम्,
फुल्लमभूत्प्रणयपद्म कुमुदिन्याः ।
यत्रातिमनोहारिणि वारिणि, चन्द्राभिराममानिन्याः ।।

शीश रख मेरा सुकोमल-जाँघ पर,
शशि-कला-सी एक बाला व्यग्र हो
देखती थी म्लान-मुख मेरा अचल,
सदय भीरु, अधीर, चिन्तित-दृष्टि से ।
वह उपाय-विहीन, पर आशामयी,
स्नेह-दृष्टि अनन्य-कोमल-हृदय की
करुण-मंगल-कामना से थी भरी,
हाय ! केवल मात्र साधन दीन की !

निजकोमलजङ्घोपरि,
शिरो मम स्थाप्य शशिकला रुचिरा ।
व्यग्रतमा बालैकाऽ-
चलमन्म्लानास्यदृष्टिनतचित्रा ॥
भीरुरधीरा सदयाऽऽ-
सीदनुपायाऽपि नैव विगताशा ।
मंगलकामनया यद-दृष्टिर्दीनस्य केवलमुपायः ॥

नित्य ही मानव-तरङ्गों में अतल
मग्न होते हैं, पर इस तरह
अमृत की जीवित-लहर के बाँह में
जगत् में कितने अभी भूले भला ?
चपल जीवन की तरी भी, विश्व में
डूबती ही है, भँवर-सी घूम कर,
मग्न होकर किन्तु सबको सहज ही
नाव मिलती है नहीं यों दूसरी ।

नित्यं मनुजन्मानः,
तरल-तरंगे भवन्ति विनिमग्नाः ।
किन्तु कियन्तोऽमृतलहरी-
जीवितबाहुपाशविनिबद्धाः ।।
चञ्चलजीवनतरणी,
प्रभवति सावर्तगर्तविनिमग्ना ।
नौका कस्यान्यैवं, सहजं मिलतीह भाग्यवैभवतः ।।

इन्दु पर, उस इन्दु-मुख पर, साथ ही
थे पड़े मेरे नयन, जो उदय से,
लाज से रक्तिम हुए थे--पूर्व को
पूर्व था, पर वह द्वितीय अपूर्व था !
बाल-रजनी-सी अलक थी डोलती
भ्रमित हो शशि के वदन के बीच में,
अचल, रेखाङ्कित कभी थी कर रही
प्रमुखता मुख की सुछवि के काव्य में ।

इन्दाविन्दुमुखेऽपि च
सहैव नयने गते ह्युदयात् ।
एको रक्तो ह्यपरं,
ह्रिया सुरक्तं तथा पूर्वः ।।
पूर्वोऽपूर्वमपूर्वम्,
बाला रजनीव बालिका तरला ।
अचला शशिनि चला सा तनुते कान्ति तदास्यनवकाव्ये ।।



श्री प्रभातमिश्रः, साहित्याचार्यः

# साम्प्रतन्तु

(लघु-कथा)



अद्य वरीवर्ति कुसुमपुरे यौवराज्याभिषेकोत्सवः। प्राचीन-प्रथानुसारं श्रीनन्ददेवः पितृ-भूमे राजा भविष्यति। दृश्यते साम्प्रतं प्रजासु समधिक-समुत्साहः, विलसन्ति प्रतिसदनं सुषमा-हेतवः कल-केतवः। राजन्ते प्रतिद्वारन्तोरणानां मालाः। गायन्ति प्रतिपथं मङ्गलगीतानि सज्जिता बालाः।

वृद्धसचिवस्समागत्य सादरन्निजगाद—महाराज! साम्प्रतं शुभमुहूर्तोऽस्ति; भवतु प्रस्तुतः सत्वरमेव श्रीमान्। विदधति च राजसभायां समवेताः हर्षिताः प्रजाः श्रीमतां प्रतीक्षाम्।

सचिवं समालोक्य श्रीनन्ददेवः प्राह-अन्तरिकस्थिते परिचितोऽहमस्य राज्यस्य पृच्छामि भवन्तम् किं समयेऽस्मिन्नस्ति कस्यापि नृपतेरावश्यकता?

सचिवो नम्रतया जगाद—धर्मावतार! श्रीमताम् प्रश्नस्याभिप्रायो न विज्ञायते। प्रजायै राज्ञ आवश्यकता कथन्नास्ति? इत्याकर्ण्य क्रुद्धेन श्रीनन्द-देवेन प्रोक्तम्—"राज्येऽस्मिन् जनाः क्षुधया क्षुब्धाः सन्ति। हिंस्र-पशु-समा मानवाः मानवान् भक्षितुं परिधावन्तिः, वर्तते गृहे गृहे ईर्ष्यायाः द्वेषस्य कलहस्य च महत् साम्राज्यम्, अलङ्करोति मूर्तिमती विलासिता प्रतिभवनम्, तस्करता, प्राणिहिंसा-प्रभृति-कुकृत्यानां दरीदृश्यते वृद्धिः, अस्य कारणञ्जानाति च भवान्?

निशम्येदमासीत् सचिवः शान्तः। राजा पुनराह—"न्यायस्य शासनस्य च महान् दुरुपयोगः सञ्जातः। विस्मृतं राज्ञा प्रजां प्रति स्वकीयं कर्तव्यम्। प्रजा उच्छृङ्खला जाताः। स्व-पूर्वजानां कलुषितजीवनवशादवनमति मदीयं

मस्तकम् । आर्यवृद्ध-मन्त्रिव ! भयानकेऽस्मिन्-कुकृत्ये भवतां कियती सहानुभूति-रासीत् ? इदमपि जनात्येव भवान् सम्यक्तया ।

पुनर्भर्त्सयन्, श्रीनन्ददेवः पुरःस्थितं मन्त्रिणं साकूतमवलोकयामास । नमस्कृत्य च मन्त्री, सादरमिदमाह–भगवन् ! याचे स्वापराधं प्रति क्षमादानमिदानीम् ।

विचारमग्नेन श्रीनन्ददेवेन कथितम्—तर्हि चल, अपराधानां प्रायश्चित्ताय राज-सभायाम् ।

विराजते च मध्येसभं मणिमण्डितमेकं राजसिंहासनम् । तस्यैव पार्श्वे स्थिताः सन्ति परिचारकाः सुसज्जिताः । आगत्य तत्रोपविश्य च राज्ञा विहिता स्वाधीनताया घोषणा; उक्तञ्च, "अयि बन्धुकल्पाः प्रजाः ! अधुना भवन्तो मह्यं कलुषित-राज्यसिंहासन-प्रदानाय उपस्थितास्सन्ति; यस्योपरि संस्थिता मानवाः दानवा इव स्वतन्त्रतापूर्वकं मानवानामुपरि सहस्रवर्षेभ्य आरभ्य अद्यावधि विदधिरे प्रतिपलमत्याचारान् । अतः परित्यज्यते मया तत्पदं प्रसन्नता-पूर्वकम् । नाऽहं भवतां राजा, किन्तु सुहृद् सेवकश्च । अहमपि भवतामिव साधारणः प्राणी । अहं विस्तृतं गगनमण्डलं स्थिरां वसुन्धराञ्च साक्षीकृत्य समुदमुद्घोषयामि यत् कुसुमपुरस्थ-प्रत्येकनागरिकस्य समानाधिकारोऽस्ति; राज्याधिकारे, वर्त्तमानासु च सकलासु संपत्सु ।

इति—संश्रुत्य निखिलाऽपि जनता आश्चर्येण चकिता बभूव । निर्धनाः कर्षकाश्च "धन्यतमो भवान्" इति गभीरतरेण घोषेण सकलं वियन्मण्डलमापूरयामासुः ।

धनिकाः, पदाधिकारिणश्च अविषमस्वरेण प्रोचुः–'असम्भवोऽयम्, एवन्न भविष्यति ।'

व्यतीतानि बहूनि दिनानि, सर्वमपि कुसुमपुरं जनानां हाहाकारध्वनिपूर्णमासीत् । बालका वनिता युवानो वृद्धाश्च सर्वेऽपि शोकसागरे निमग्ना इव परिभ्राम्यन्तिस्म । इहलोकं सशोकं विधाय, परलोकं ययौ श्रीनन्ददेवः । पूतात्मनस्तस्य कृते विलपन्तः कुसुमपुरस्य नागरिकाः शवेन सार्द्धमगच्छन् ।

श्यामला-नाम्न्या नद्यास्तटे प्रज्वलतिस्म चन्दनचर्चिता चिता । आसीच्चैत्रस्य पूर्णिमा । स्नपयतिस्म सुधाकरः सुधाधारया सर्वं संसारम् । चिता-निःसृता चञ्चला ज्वाला-माला, "असारोऽयं संसारः" इति सूचयन्ती, ऊर्ध्वं व्रजन्ती, श्रीनन्ददेवस्य कीर्तिं स्वर्गे प्रेषयन्तीव दृश्यते । आसीत् साम्प्रतं शान्ता प्रकृतिरपि मूकायमाना सर्वमवलोकयन्तीव ।

चितायामवशिष्टोऽस्ति केवलो धवलो भस्मराशिः । विलोकयन्तिस्म कुसुमपुरीयाः प्रजाः, आश्चर्येण, शोकेन, कौतूहलेन च ताम् ।

पूर्वं स वृद्धसचिवः श्रद्धया-अवनतीभूय, भस्मभारमादाय दधार स्वमस्तके, तदनन्तरमन्येऽपि तत्र स्थिताः शोक-सम्भृता जनाः सचिवसरणिमनुसृतवन्तः । स्वस्थीभूय वृद्धसचिवश्शोकनिमग्नां समागतां सकलजनतां समाहूय, संबोध्य च अकथयत् ।

वने पशूनां शासकस्सिंहो भवति यथा; तथैव नगरे मनुजानां शासको राजा । तत्रभवान् भगवान् पशूनामपेक्षया समधिक—ज्ञान-सम्पन्नान् मानवान् निर्मितवान् । अतएव पशुराज इव मनुजराजोऽपि यदा स्वप्रजां भक्षयति तदा समालोचयति जनसमाजोऽत्याचरम्,—मीमांसयति न्यायान्यायौ, पुनरुद्भवति मानवानां मनसि प्रश्नोऽयं किं कस्योपरि कोऽपि शासनाधिकारी ?

एतादृशोऽवसरः कुसुमपुरस्य इतिहासे बहुवारं समायातः । महाराजेन नन्ददेवेन राजधर्मः स्वजीवनदानेन सूचितः । अधुना प्रकृति-मधुराय कुसुमपुराय अस्ति भूयोऽपि बहुबलस्य शासन-कुशलस्यैकस्य नृपस्य महती आवश्यकता ।

इत्याकर्ण्य शोकहतया जनतया तारस्वरेणोक्तम् "नास्ति अस्मत्कृते क्रूरराजस्य काऽपि आवश्यकता, किन्तु श्रीनन्ददेवस्य, वयं सर्वथा स्वतन्त्राः ।"

भूतेयं घटना प्राचीनतमा । तदारभ्य अद्यावधि राजप्रजयोर्मध्ये भीषणतमस्समरस्संजातः । समयोऽपि कदापि राज्ञः पक्षे; कदापि प्रजायाः पक्षे स्वाभिमतं प्रकटीचकार ।

साम्प्रतन्तु..............................? (अनूदिता)

●

# आस्माकीनम्

स्वर्गतःप्राचार्यो ब्रह्मानन्दशुक्लः

अतीते खलु, २०२६ तमे संवत्सरे गीर्वाण्या अपूरणीया क्षतिरभवत्, यतो न केवलं संस्कृतभाषासमुपासकाः संस्कृतपरम्पराप्रवर्द्धयितारोऽपि तु देशभक्तिभावनया भाविता विद्वांस आचार्या अस्मिन् वत्सरेऽस्मान् विहाय परलोकं गतवन्तः। तेषु नेहरूचरितमहाकाव्य-प्रणेतारः ब्रह्मानन्दशुक्लमहाभागाः खुर्जास्थ-राधाकृष्ण संस्कृतविद्यालयस्य आचार्यपदमलङ्कुर्वाणाः कियत्यो वा सेवाः संस्कृतवाण्यै न प्राददुः। शुक्लमहोदयः स्वमृषिपरम्परायां प्रारक्षन् त्यागमय्या वृत्या विद्यावितरणमकरोत्, देशभक्तिभावनाया जागरणं तेन संस्कृतविद्यालयेष्वपि उज्जागरितम्। इतोऽप्यधिकं तेन शिक्षितेषु समाजवर्गेषु संस्कृतविद्यां प्रति उत्कटाध्ययनाभिलाषाः प्रारोपिताः। हन्त ! अद्य नैतादृशः संस्कृतविद्याजागरणचेतसो लक्ष्यन्ते। वयमीश्वरं शुक्लमहोदयस्य सद्गत्यर्थं प्रार्थयामः। अत्रैतावान् सन्तोषो यत् पण्डितब्रह्मानन्दशुक्लमहोदयस्य निकटवर्तिभिः सम्पर्किभिश्च तस्य जीवनकाल एव 'संस्कृतवैभवम्' इति नामा शुक्लाभिनन्दनग्रन्थः तस्मै १९६९ तम ईस्वीवर्षे उपहारीकृतः। एष अभिनन्दनग्रन्थः अलीगढस्थ—संस्कृतपरिषदा प्रकाशितो वर्तते, शुक्लमहोदयस्य यशोऽनुरूपमेवास्य अभिनन्दनग्रन्थस्य कलेवरं संस्कृतभाषायां लिखितैः लेखैः प्रकाशते। एतेन वयं कञ्चित् तोषं लभामहे।

स्व० सम्पादकः पण्डितश्रीहरिशास्त्री

जयपुरनगर्याः प्रकाशितायाः 'भारती' संस्कृत-पत्रिकायाः सम्पादकः संस्कृतभाषासेवापरायणः सुकविः पण्डितश्रीहरिशास्त्री नाद्याऽस्माकं मध्येऽस्ति, तस्य

केवलन्नाम यशःकलेवरं वर्तते। अयं महाभागः 'भारती' पत्रिकायाः सम्पादनात् प्राक् महाराजासंस्कृत-कालेज-जयपुरे साहित्यविभागाध्यक्षपदमलमकरोत्। अवकाशानन्तरं पत्रिकायाः सम्पादने संस्कृतवाण्यै स्व-सेवाः समर्पितवान्। शास्त्रिमहोदयस्यात्मनः शान्त्यर्थमीश्वरं प्रार्थयामः, कुटुम्बिजनेभ्यः समवेदनां ज्ञापयामः।

स्व० पण्डितकाशीनाथद्विवेदिमहाभागः

काशी-निवासी द्विवेदिमहाभागः 'रुक्मिणीहरण'—काव्यं प्रणिनाय, एषा कृतिः उत्तरप्रदेशसरकारेण पुरस्कृताऽभवत्। अद्यापि एतादृशानि काव्यानि संस्कृतभाषायां कवयः कुर्वन्ति, इति प्रमोदस्य विषयः। तेषु प्रणेतृषु द्विवेदिमहाभागोऽन्यतमं स्थानं प्राप्नोत्। संस्कृतपरम्परायाः गौरवञ्चावर्द्धयत्। स्वर्गतस्यापि तस्यात्र यशःकायोऽजरत्वं लभते। वयमेतस्मै कृतिने स्वर्गतात्मने श्रद्धाञ्जलिं समर्पयामः।



येषामलौकिकनवीननिबन्धजातै-
रद्यापि काव्यकुसुमानि रसाप्लुतानि।
आस्वाद्य माद्यति चिराय विदां समाज-
स्ते वै जयन्ति कवयो गुरवः पुराणाः॥

श्रीनेहरूचरितमहाकाव्यात्



# SAṄGAMANĪ

( Sanskrit Quarterly Magazine )

Edited

by—Prabhat Shastri Shahityacharya

Annual Subscription—

Rs. Twelve<br>
Per copy - Rs. 3/50 } In Foreign

---

संगमनी—दिल्लीकार्यालयस्य सङ्केतः—


श्रीगोकुलचन्द्रशास्त्री

[अवैतनिकप्रबन्धसम्पादकः]

५१ राजाकेदारनाथगली

चावड़ी बाजार,

दिल्ली—६


---


Published by Prabhat Shastri for Sanskrit Sahitya Parishad Daraganj, Allahabad-6 ( India ) and Printed by Deobani Mudranalaya, Allahabad-6 (India).

उत्तरप्रदेशीय-शिक्षा-विभागीय-बी-१४५६१-१४८३०।१८-८२
(१२)६६-६७लखनऊ-२९नवम्बर'६६ (गजट भाग-४)
द्वारा एषा पत्रिका विद्यालय-महाविद्यालय-दीक्षा-
विद्यालयीय-पुस्तकालयेषु क्रयार्थं स्वीकृता ।

अनुक्रमः







# संगमनी

# Sangamani

Sanskrit Quarterly

**संस्कृत त्रैमासिकी**

चतुर्थवर्षे चतुर्थोऽङ्कः

संवत् २०२५

सम्पादकः

**प्रभात शास्त्री**

सहसम्पादकौ

**तारिणीश झाः** **डा० जयशङ्कर त्रिपाठी**

प्रयागस्थ-संस्कृत-साहित्य-परिषदः प्रकाशनम्

कार्यालयः
संगमनी
दारागंज—प्रयागः

वार्षिकं मूल्यम्
रु०५·००
प्रत्यङ्कम् रु०१·५०

परामर्श-समज्या

डा० हरवंशलाल शर्मा (अलीगढ़म्)

श्रीबालकृष्णरावः (प्रयागः)

श्रीकमलापति मिश्रः



लक्ष्यं योजना च

- इयं संगमनी संस्कृतस्य निःस्वार्थसेवाया नामान्तरम् ।
- अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्ण-लेखानां परिचर्यायाश्च प्रकाशनम्,
- संस्कृतभाषाया अप्रकाशितपाण्डुलिपेश्च प्रकाशनं भवति ।
- अनया संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्नो विधीयते ।



# संगमनी

अहं राष्ट्री संगमनी वसूनाम्

—ऋग्वेदे १०।१२५।३

४ वर्षे (VoL. IV) * संवत् २०२५ * (NO. 4) ४ अङ्कः


## भगवान् नृसिंहः

सन्ध्यारञ्जितशीतदीधितिकलासौन्दर्यभाजो नखाः,
प्रीतिं पीवरयन्तु कैटभरिपोः क्रीडा नृसिंहस्य वः ।
दैत्योरःस्थलपीठकुण्ठिततया दीनेन दम्भोलिना,
सासूयं सकुतूहलं सविनय माश्चर्यमालोकिताः ॥

—बालसरस्वत्याः

चक्रं ब्रूहि विभो गदे जय हरे कम्बो समाज्ञापय,
भो भो नन्दक जीव पन्नगरिपो किं नाथ भिन्नो मया ।
को दैत्यः कतमो हिरण्यकशिपुः सत्यं भवद्भ्यः शपे,
केनास्त्रेण नखैरिति प्रवदतः शौरेर्गिरः पान्तु वः ॥

—केशटस्य

महाकवि राजशेखरः

# देशदर्शनम्

पूर्णं नागरखण्डमार्द्रसुभगं पूगीफलं कालयः,
कर्पूरस्य च यत्र कोपि चतुरस्ताम्बूलयोगक्रमः ।
देशः केरल एष केलिसदनं देवस्य शृङ्गारिण-
स्तं दृष्ट्वा कुरु कोमलाङ्गि सफले द्राघीयसी लोचने ।। १

वाक्सत्त्वाङ्गसमुद्भवैरभिनयैर्नित्यं रसोल्लासतां,
वामाक्ष्यः प्रणयन्ति यत्र मदनक्रीडामहानाटकम् ।
अत्रान्ध्रास्तव दक्षिणेन त इमे गोदावरीस्रोतसां,
सप्तानामपि वारिधिप्रणयिनां द्वीपान्तराणि श्रिताः ।। २

यत्क्षेमं त्रिदिवाय वर्त्म निगमस्याङ्गं च यत्सप्तमं,
स्वादिष्ठं च यदैक्षवादपि रसाच्चक्षुश्च यद्वाङ्मयम् ।
तद्यस्मिन्मधुरं प्रसादि रसवत्कान्तं च काव्यामृतं,
सोऽयं सुभ्रु पुरोविदर्भविषयः सारस्वतीजन्मभूः ।। ३

एतन्मालवमण्डलं विजयते सौजन्यरत्नाङ्कुरैः,
संपद्विभ्रमधामभिः किमपरं शृङ्गारसारैर्जनैः ।
यत्रारुह्य विचित्रचित्रवलभीलीलाशिलासद्मनां,
नीयन्ते जलदोदयेषु दिवसाः कान्तासखैः कामिभिः ।। ४

•

भारतीयशास्त्रेषु त्रिविधा शास्त्रव्युत्पादनशैली नित्यं विराजते इति विदांकुर्वन्तु तत्त्वजिज्ञासवो विवेचकाः । अलङ्कारमुखेन तद्वैशिष्ट्यमनुरुध्यैव शास्त्रदृष्ट्याः त्रैविध्यं प्रतिपादनमर्हति । तत्र—

( १ ) प्रथमा दृष्टिः स्वभावोक्तिमयी । पदार्थानां यथावस्थितरूपप्रतिपादनपरोऽलङ्कारः स्वभावोक्तिनाम्ना व्यपदिश्यतेऽलङ्कारशास्त्रे । तद्वत् भौतिकपदार्थानां यथार्थरूपनिर्देशे जागर्ति स्वभावोक्तिमयी दृष्टिरायुर्वेदज्यौतिषादिविज्ञानात्मकेषु शास्त्रेषु । ज्योतिःशास्त्रं सूर्यस्योदयं नभसि मेघानामुत्पत्तिं वायुप्रकोपात् तेषामितस्ततो भ्रमणं वृष्टिरूपेण जलप्रपतनं चेत्यादिविषयं स्वभावोक्तिशैलीमनुसृत्यैव वर्णयति ।

( २ ) द्वितीयशैली रूपकमयी । अलङ्कारशास्त्रे रूपकनामाऽलङ्कारः सुतरां विख्यातः । अतिसाम्यात् अनुपहृतभेदयोः उपमानोपमेययोरभेदो रूपकनामा व्यपदिश्यते । अस्याः साम्राज्यं वेदे एव समुपजृम्भते । तत्र इन्द्रवृत्रयोः युद्धं वर्णयति श्रुतिः । तद् यथा—

**यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् ।**
**ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥**

ऋग्वेद २।१२।११

अत्र वृष्टिप्रतिरोधकं तत्त्वं वृत्रशब्देन वृष्टिप्रदायकं तत्त्वमिन्द्रशब्देन च निरुक्तानुसारेण व्यवह्रियते । तत्र रूपकविधयैव एतयोरुभयोस्तत्त्वयोः संघर्षात्मको विधिः इन्द्रवृत्रयुद्धरूपेणोपवर्ण्यते वेदे । रूपकशैल्या सुन्दरं निदर्शनमेतत् ।

( ३ ) तृतीया शैली अतिशयोक्तिमयी । अतिशयमुखेन यत् किञ्चित् प्रतिपाद्यते तत्र विलसति एषा शैली । अस्याः साम्राज्यं पुराणे विराजते । भागवतस्य षष्ठे स्कन्धे इन्द्रवृत्रयुद्धस्य विस्तृतं विवरणं समुपलभ्यते । तत्र वृत्रो नाम दानवानां पराक्रमशाली नानासैन्यशस्त्राद्युपबृंहितो महानधीशः, इन्द्रश्च देवानां सम्राट् । तयोर्भयावहं युद्धं प्रतिपादयत् पुराणं तयोरैहिकीं स्थितिं वास्तविकजीवनयापनं चोपन्यस्यति । भागवतस्य षष्ठस्कन्धस्य एकादशाध्याये एतयोः साश्चर्यं युद्धं प्रदर्शितम् ।

**ऐरावतो वृत्रगदाभिमृष्टो विघूर्णितोऽद्रिः कुलिशाहतो यथा ।**
**अपासरद् भिन्नमुखः सहेन्द्रो मुञ्चन्नसृक् सप्तधनुर्भृशार्तः ।।**

अयमत्र निष्कर्षः । सतीष्वपि तिसृषु शैलीषु एकमेव तत्त्वं प्रतिपाद्यते । न हि शैलीभेदात् तत्त्वभेदः । शैलीभेदात् वर्णनभेदो भवतु नाम । वेदे इन्द्रवृत्र-संघर्षः अवर्षणदानवं विदार्य वृष्टिप्रदानात्मकं तत्त्वं प्रद्योतयति । पुराणेऽपि स एव संघर्षः समुपलभ्यते, परन्तु शैलीभेदात् अतिशयोक्तिप्रचुरमाख्यानप्रधानं च विवरणमुपलभ्यमानं वैदिकवर्णनात् तत्त्वविषये न किञ्चिदपि विभेदमाविष्क-रोति । यदेव तात्पर्यं वेदे, तदेव तात्पर्यं पुराणेऽपि । पुराणं सर्वात्मना वैदिकमेव तत्त्वं विवृणोति, परन्तु बालानां कृते रोचकरुचिरामाख्यानशैलीमनुसृत्यैव प्रवर्तते ।

अवतारवर्णनं पुराणानां जीवातुरिव विराजते । तत्र न्यायान्याययोः धर्माध-र्मयोरुपजृम्भमाणं संघर्षं निरस्य न्यायस्य स्थापनाय धर्मस्य च संरक्षणाय प्राणिजातेषु करुणाशीलः सर्वशक्तिमान् भगवानेव नानाविग्रहरूपेण अवतरति जगतीतले इति पौराणिकमवतारतत्त्वरहस्यं वेदस्य सिद्धान्तजातमेवोपजीवति । अन्यच्च पुराणेषु निर्दिष्टान्याख्यानानि रहस्यरूपेण श्रुतिप्रतिपादितमेव सिद्धान्त-मभिव्यञ्जन्ति । यथा दक्षयज्ञपराभवस्य रहस्यं विचारयन्तु विवेचकाः । किमर्थं शिवेन साकं दक्षप्रजापतेः पारस्परिकः संघर्षो रूढपदो जातः, किमर्थं दक्षस्य यज्ञं पराभूय कृतकृत्यो जातः शङ्करः ? विश्वस्य मांगल्यसाधकं यदेव परमात्मभूतं तत्त्वम्, तदेव शिवनाम्ना अभिधीयते । शिवो वृषमारुह्य जगति प्रचलति । तत्र 'वृषस्तु भगवान् धर्मः' इति वचनात् सर्वात्मना धवलवपुर्वृषभो नन्दी साक्षात् धर्मरूप एव । धर्मस्याश्रयेणैव जगतां मङ्गलं साध्यते इति तद्रहस्यम् । नानाविधद्रव्याणामुत्पादने सर्वथा समर्थं यत् भौतिकं तत्त्वं तदेव दक्षनाम्ना व्यपदिश्यते पौराणिकैः । अत एव शिवः अध्यात्ममार्गस्य प्रतिनिधिः । दक्षस्तु भौतिकवादस्य प्रतीकः । उभयोः शाश्वतिकः विरोधः । दक्षः शिवं विरुध्य तत्सामर्थ्यमपाकृत्य जगतीतले स्वीयं साम्राज्यं समुपजृम्भितुं समीहते । परन्तु भौतिकवादाश्रयेण नैव सम्भवि जगतां वास्तविकं कल्याणमिति हेतोः शङ्करस्तं

विरुणद्धि । अस्मिन् संघर्षे दक्षस्यैव संजातः पराभवः शम्भोश्च विजयः समजनि । महेश्वरस्मरणेन यत् सुखमुपलभ्यते, न तत् भौतिककाञ्चनसम्पदामुपभोगेन कदापि सम्भवति । साधूक्तं स्तुतिकुसुमाञ्जलौ जगद्धरभट्टेन (१६।२०)—

**क्व महेश्वरस्मरणसम्भवं भवभ्रमभीमघर्मशमसंमुखं सुखम् ।**
**विपदां पदं मृदुमृणालिनीदलस्खलदम्बुबिन्दुतरलाः क्व सम्पदः ।।**

एवं शमदमयोः परस्परं विरोधो जागरूको विद्यते—

**क्व समाधिबाधितदुराधिसाधिमा भवसम्भवश्रमदमक्षमः शमः ।**
**क्व मदः प्रदर्शितसमग्रविग्रहः प्रहसन्मनस्विजनगर्हितस्थितिः ।।**

शमेनैव जगतां कल्याणं प्रसिध्यति, न कदापि मदेन । अत एव शमस्वरूपेण शिवेन मदस्वरूपो दक्षो नूनं निजं पराजयमर्हतीति प्रतिपादयत्येषा पौराणिकी कथा । अर्थधर्मयोर्मध्ये जायमाने विरोधे धर्म एव महनीयगुणगणीयं तत्त्वमिति श्रुतिप्रतिपादितः सिद्धान्त एव कथयाऽनया स्वाभिव्यक्तिं भजते । फलतः पुराणानि साक्षादभिधया कथान्तर्निविष्टया व्यञ्जनया च श्रुतितत्त्वान्येव प्रतिपादयन्ति स्वोपजीव्यरूपेणेति सिद्धान्तः साधु स्फुरति ।

अत एव धर्मस्य जिज्ञासानिवृत्त्यर्थं पुराणानामालोचनं नूनं विधेयमाधुनिकैर्जनैरिति तत्त्वं दृढं भवति ।

●

गर्वोक्तिः

**सरस्वती घनश्यामो घनश्यामः सरस्वती ।**
**इत्येव यं प्रति प्रायः किंवदन्ती प्रवर्तते ।**

—घनश्यामकवेः

●

श्रीप्रभातमिश्रः

# कथेयम्

●

न यत्राऽस्ति कुत्राऽपि साहित्यरीतिः,
मया चित्रिता तादृशी काऽपि गीतिः।

●

भुवि भ्रष्टभूतोऽस्म्यहं भग्नहारः,
चितावेदिकाया अहं क्षारभारः।

●

वसन्तेन हीनः क्षणक्षीणदेहः,
लतावीथिकाया अहं शुष्कगेहः।

●

मनोमन्दिरे स्थीयमाना कदाचित्,
न सम्प्राप्यते, साम्प्रतं, सा कथञ्चित्।

●

अतो दीनमीनायमाना विशाला,
व्यथागीतिलीनाऽस्म्यहं भृङ्गमाला।

●

भवत्सन्निधौ भोः! भवेत् संस्तवोऽयम्,
कवेस्सम्मतौ तु व्यथायाः कथेयम्।

●

श्रीविश्वनाथमिश्रः

# मम्मटीयोपमालक्षणविमर्शः



विच्छित्तिविशेषजनकतया अलंकाराणां काव्यशास्त्रेऽस्ति स्वकीया महनीयता। तत्र शब्दार्थगताः सन्ति भूयांसोऽलंकाराः सादृश्यमूलकाः। अनुप्रासे शब्दसादृश्यं ख्यातमेव। एवमेव स्मरणान्वयसंदेहतुल्ययोगितादिषु सादृश्यस्य नान्तरीयकत्व-मनपह्नवनीयमेवास्ते। नात्र चित्रं यत् सादृश्यमूलकालंकाराणामाधारशिला उपमैवेति। मम्मटात् प्राग्भाविनः पश्चाद्वर्तिनश्चालंकारशास्त्रिणो निपुणां लक्षणायाश्चक्रुरुपमाम्। तद्यथा—

प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः।
भूयोऽवयवसामान्ययोगः सेहोपमा मता॥ [1]

यथा कथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते।
उपमा नाम सा तस्याः प्रपञ्चोऽयं प्रदर्श्यते॥ [2]

उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा॥ [3]

उपमानोपमेयस्तु गुणलेशतः साम्यमुपमा॥ [4]

साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोः॥ [5]

उपमा तत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः॥ [6]

सादृश्यं सुन्दरं वाक्यार्थोपस्कारमुपमालंकृतिः॥ [7]

---

१. सरस्वतीकण्ठाभरणम् २. काव्यादर्शे दण्डी ३. अलंकारसर्वस्वम् ४. काव्यालङ्कारे वामनः ५. साहित्यदर्पणम् ६. कुवलयानन्दे ७. रसगङ्गाधरे।

उपर्युक्तेपूपमालक्षणेषु केवलम् अलंकारसर्वस्वकृतो रुय्यकस्य लक्षणमपहाय सर्वत्र सादृश्यस्यैवोपमात्वं प्रदर्शितम् । अर्थात् यत्रोपमानोपमेययोश्चमत्कारजनक सादृश्यमवतिष्ठते तत्रोपमालंकारः । सादृश्यञ्च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । तद्गतभूयोधर्मवत्त्वञ्च तद्गतभूयोधर्मसम्बन्धः । चन्द्रभिन्नत्वेसति चन्द्रगताह्लादकत्वादिमत्त्वेन मुखे चन्द्रसादृश्यम् । एवं गोभिन्नत्वे सति गोगतजाड्यसजातीयजाड्यवत्तया गवा सह वाहीकस्य सादृश्यम् । एवञ्च यस्य सम्बन्धो यत्र कुत्रापि प्रदीयते स प्रतियोगी, यत्र प्रदीयते सोऽनुयोगीति कृत्वा उपमानप्रतियोगिकः, उपमेयानुयोगिकः सम्बन्धः सादृश्यं, तदेव च चमत्कारकं सद् उपमेति फलति । तेन "गौरिव गवयः" इत्यादौ नातिव्याप्तिः ।

आचार्यो मम्मटः अलकारसर्वस्वकारमनुसरन् "साधर्म्यमुपमा भेदे" इत्युपमां लक्षणयाञ्चकार । किञ्च तद् साधर्म्यमिति विवेचयता वामनीकारेणोक्तम्— समानः एकः तुल्यो धर्मो गुणक्रियादिरूपो ययोस्तौ सधर्माणौ, तयोर्भावः साधर्म्यम् । उपमानोपमेययोः समानधर्मेण सह सम्बन्ध इत्यर्थः । कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेति नियमात् तथैव वक्तुं युक्तत्वात् । वर्तते चात्र समासोत्तरं भावप्रत्ययः । काव्यप्रदीपोद्योतकारेणाप्येवमेव व्याख्यातम् साधर्म्यं-साधारणधर्मवत्त्वम् । तच्च साधारणधर्मसम्बन्ध एव । एतावता प्रपञ्चेन सादृश्यसाधर्म्ययोरैक्यमेव सिद्ध्यति । परन्तु अग्रे साधर्म्यस्य सादृश्यप्रयोजकत्वमभिमन्यमानेन वामनीकारेणोच्यते—"एवञ्च सादृश्यप्रयोजक साधारण धर्मसम्बन्धः उपमेति । साधारणधर्मदर्शनमन्तरा न युज्यते वक्तुं सादृश्यमिति तस्य तात्पर्यं प्रतिभाति । विस्तारिकायां परमानन्दचक्रवर्तिनाप्युक्तम् सादृश्यस्य प्रतियोगी उपमानम्, अनुयोगी चोपमेयम्, अस्य च साधर्म्यस्य उपमानमुपमेयमिति द्वावप्यनुयोगिनौ, प्रतियोगी च साधारणधर्मः । एवञ्च साधारणधर्मप्रतियोगिकः, उपमानोपमेयोभयानुयोगिकः सम्बन्धः साधर्म्यं तदेव चोपमा । इदञ्च साधर्म्यं सादृश्यप्रयोजकम् । नहि साधारणधर्मस्योभयत्र स्थितिमन्तरा सादृश्यमुपपादयितुं शक्यते । एवञ्च सादृश्यप्रयोजकसाधारणधर्मसम्बन्धः उपमा । सादृश्यञ्चातिरिक्तः पदार्थः ।

अत्र विचार्यते—साधर्म्यसादृश्ययोः पार्थक्यमुररीकृत्य साधर्म्यस्य सादृश्य-प्रयोजकत्वे स्वीक्रियमाणे तस्योपमानोपमेयोभयानुयोगिकत्वेन "आह्लादकत्ववती चन्द्रमुखे" इति वाक्यस्योपमात्वं प्रसज्येत । सम्बन्धश्चात्र समवायः । आह्लादक-त्वस्य गुणत्वात्, गुणगुणिनोश्च समवायस्यैव क्लृप्तत्वात् । न च समवायस्यो-पमात्वं केनापि स्वीकृतम् । तस्मात् साधर्म्यसादृश्ययोः पार्थक्यं नैव वक्तुं युक्तम् । वस्तुतस्तु—सादृश्यमपि तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति पूर्वमेवावोचम् । तद्गतभूयोधर्मवत्त्वं नाम तद्गतभूयोधर्मसम्बन्धः । साधर्म्यमपि साधारणधर्म एव । एवञ्चोभयोः पर्यायत्वमनायासेनैव वक्तुं सुकरम् । अतएवोभयत्र दृश्यते उपमानोपमेययोः समानधर्माधिकरणत्वम् । समानधर्माधिकरणत्वमेव सादृश्यं न तु समानधर्मसम्बन्धप्रयोज्यं तत् ।

यदि च सादृश्यं भिन्नं साधर्म्यञ्च भिन्नमित्यभिप्रेयते तदा उपमायाः श्रौत्यार्थीविभागोऽपि अव्यवस्थित एव स्यात् । उक्तं हि—

**श्रौती यथेव वा शब्दे इवार्थे वा वतिर्यदि ।**
**आर्थी तुल्यसमानाद्या तुल्यार्थे यदि वा वतिः ।।**

श्रौती शब्दगम्या, शब्दस्याभिधया वाच्येत्यर्थः । आर्थी तु अर्थवशाल्लभ्या आक्षेपगम्येति यावत् । तत्र यथा, इव, व, इवार्थको वतिप्रत्ययश्च सादृश्ये शक्ताः सन्ति । तस्मात् एभिः शब्दैः सादृश्यमेवोच्यतेऽत एषां समवधाने उपमा श्रौती । तुल्यः, समानः, तुल्यार्थको वतिप्रत्ययश्च सादृश्यवति ( सदृशे ) व्यक्तिविशेषे पदार्थविशेषे वा शक्ताः सन्ति इति एषां समवधाने सादृश्यविशिष्टस्य पदार्थस्य बोधः शाब्दः, सादृश्यप्रतीतिस्तु आर्थी । यदि न स्यात् अनयोः सादृश्यं तदा कथंकारमिमौ सदृशाविति प्रश्नस्य तत्र जागरूकतया सादृश्यस्यार्थत्वं सुतरां सिद्ध्यति ।

न च इवादिशब्दानां सादृश्यवाचकत्वे तुल्यादिशब्दानाञ्च सदृशवाचकत्वे विनिगमनाविरह इति वाच्यम्? "चन्द्रतुल्यं मुखम्" "चन्द्र इव मुखम्" इत्युभयत्र जायमानबोधवैलक्षण्यस्यैवात्र मानत्वात् । चन्द्रतुल्यं मुखमित्यत्र चन्द्रसदृशाभिन्नं मुखमिति बोधः । अत्र निपातातिरिक्तयोः समानविभक्तिकयोर्नामार्थयोः परस्पर-

मभेदान्वयः। चन्द्र इव मुखमित्यत्र तु चन्द्रप्रतियोगिकं यत् सादृश्यं तद्वत् (तदधिकरणम्) मुखमिति बोधः। अत्र इवार्थसादृश्यस्य मुखेन सह नाभेदान्वयः किन्तु अनुयोगितासम्बन्धेन, स्वनिष्ठाधेयतानिरूपिताधिकरणतारूपभेदसम्बन्धेन वा मुखेऽन्वयो भवति। एवञ्चोभयत्र विभिन्नार्थकत्वं स्पष्टमेव। तथा च यथेवादिशब्दानां साक्षात् सादृश्यसम्बन्धवाचकत्वेन तत्सद्भावे श्रौती उपमेति वक्तु युक्तम्। तुल्यसदृशसमादिशब्दानां सदृशादिसम्बन्धिवाचकत्वेन तेषां सद्भावे सम्बन्धिस्वरूपविहितः सम्बन्धप्रतीतेः सम्बन्धस्यार्थत्वमिति तत्रार्थी उपमा।

साधर्म्यसादृश्ययोः भेदमङ्गीकृत्य श्रौत्यार्थीविभागः कृतो वामनीकारेण— यथेवादिशब्दानां सादृश्यप्रयोजकसाधारणधर्मसम्बन्धरूपे साधर्म्ये शक्ततया यथेवादिशब्दानां प्रयोगस्थले साधारणधर्मसम्बन्धरूपं साधर्म्यं वाच्यं, सादृश्यन्तु आर्थम्, इति श्रौती उपमा। तुल्यसदृशादिशब्दानां सादृश्यवति शक्त्या तेषां योगे सादृश्यं वाच्यम्, साधारणधर्मसम्बन्धरूपं साधर्म्यन्तु आर्थम्। यदि साधर्म्यं न स्यादुभयोस्तदा कथमिमौ सादृश्यवन्तौ इति।

अत्र विमृश्यते। तुल्यशब्दस्य सादृश्यवति शक्तत्वं स्वीकृत्यापि तद्योगे सादृश्यं वाच्यमिति वदतो मते इवशब्दस्य तुल्यशब्दस्य चोभयोः सम्बन्धवाचकत्वं स्पष्टमेव सिद्ध्यति। एवञ्चोभयत्र सम्बन्धमेवाधारीकृत्य क्रियमाणः श्रौत्यार्थीविभागः कथं संगच्छताम्? मम तु इवशब्दस्य सादृश्यरूपसम्बन्धवाचकत्वम्, तुल्यशब्दस्य च सदृशरूपसम्बन्धिवाचकत्वमिति सम्बन्धसम्बन्धिवाचकत्वप्रयुक्तमुभयोः पार्थक्यं संगच्छते। किञ्च यदि तुल्यपदसमभिव्याहारे सादृश्यं वाच्यं भवति, तदा सादृश्यस्य सम्बन्धत्वेन, सम्बन्धस्य चोभयनिष्ठत्वेन तेन तुल्यं मुखमित्यत्रोपमेये एव, तत्तुल्यमस्येत्यत्र उपमाने एव, इदञ्च, तच्च तुल्यमित्यत्र उभयत्रैव तुल्यादिशब्दानां विश्रान्तिरिति मम्मटोक्तं कथं संगच्छेत्। त्रिष्वपि उदाहरणेषु उपमानोपमेययोरुभयत्रैव तुल्यार्थस्य विश्रान्तेः।

तुल्यशब्दः सम्बन्धिबोधक इति वदतां मतानुसारेण तु तेन तुल्यं मुखमित्यत्र मुखतुल्ययोः समानविभक्तिकतया सामानाधिकरण्येन मम्मटोक्तं साधु संगच्छते।

अपरञ्च, साधर्म्यस्य सादृश्यभिन्नत्वे स्वीक्रियमाणे तथा इव यथा प्रभृति-शब्दानां तद्वाचकत्वे चाङ्गीकृते सति, इवादिपदघटितेषु चन्द्र इव मुखमित्याद्युपमावाक्येषु, तथा –

**कलाधरस्येव कलावशिष्टा विलूनमूला लवलीलतेव ।**
**अशोकमूलं परिपूर्णशोका सा रामयोषा चिरमध्युवास ॥**

इत्यादाविवादिपदघटितेषु सर्वत्रैव साधर्म्यस्यैव बोधो जायेत, तस्यैव शब्द-वाच्यत्वात्, न तु सादृश्यस्यापि बोधः, तस्याक्षिप्तत्वात्, आक्षिप्तस्य शाब्देऽनन्वयात् । तथा च साधर्म्ये उपमानोपमेययोरुभयोरपि अनुयोगित्वमेव, साधारण-धर्मस्य च प्रतियोगित्वमेव प्रतिभासेत, न तु उपमानप्रतियोगिकः उपमेयानुयोगिकः सादृश्यसम्बन्धः उपमास्थले ख्यातिं गतोऽपि कदाचिदपि प्रतिभासेत । किन्तु प्रतिभासतेऽसावेव न तु उपर्युक्तलक्षणलक्षितं साधर्म्यमपि कथञ्चिदिति निश्चीयते उभयोरैक्यसम्भवेति । यदि स्यात् पार्थक्यं साधर्म्यसादृश्ययोस्तदा—

**प्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ।**

इत्यत्रोपमादोषनिरूपणावसरे अत्र काव्यस्य शशिना, अर्थानाञ्च रश्मिभिः साधर्म्यं न प्रतीतमित्यनुचितार्थत्वमित्युक्तं मम्मटेन । तच्चेदं मम्मटोक्तं सर्वथैव विरुद्ध्येत । साधर्म्यस्योपमात्वे हि साधारणधर्मप्रतियोगिकः काव्यशश्यनुयोगिकः सम्बन्धो न कुत्रापि दृश्यते इत्येवं रूपेण वाच्यं स्यात् । प्रस्तुतग्रन्थस्तु साधर्म्यस्य सादृश्यपरत्वे हि संगमिष्यते । न दृष्टं प्रतीतं वा काव्यशशिनोः सादृश्यमित्येवं रूपेण ।

मम्मटोक्ते उदाहरणे—

**स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।**
**प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥**

अत्र स्वाधीनपतिका उपमानम्, विजयश्रीरुपमेया, न मुञ्चति इति मोचनाभावः साधारणो धर्मः यथा शब्दः उपमावाचकः । अत्र विचार्यते-उपमानं हि सादृश्यप्रतियोगितया विवक्षितः, उपमेयश्चानुयोगितया । एतच्च प्रकृते सादृश्य-

स्योपमात्वे एव संगतं भविष्यति, नान्यथा। साधर्म्यस्योपमात्वे हि स्वाधीनपतिका विजयश्रीश्च एतद्द्वयमपि अनुयोगि स्यात्, मोचनाभाव एव प्रतियोगी स्यात्। न च भवति एतादृशी प्रतीतिरुपमाया अत्रोदाहरणे। यथा शब्दस्य च सादृश्ये शक्ततया साधर्म्ये चाशक्ततया तस्योपमावाचकत्वमपि न संभवेत्।

एवञ्च साधर्म्यस्य सादृस्यात् पृथक्त्वेऽङ्गीक्रियमाणे बहूपप्लवः स्यादिति तयोरैक्यमेवादरणीयम्। अत एव सादृश्यस्य भेदे एव संभवात् प्रदीपकारेणापि शंकितम्––"नन्वेवं भेदे इत्यनुपादेयमेव, तस्याक्षेपेणैव लाभसंभवात्। नह्यभेदे सादृश्यात्मकं साधर्म्यमिति चेन्न साधर्म्यपदस्यारोपितसाधारणधर्मसम्बन्धमात्रपरत्वेन आरोपितसाधर्म्यनिबन्धनस्यानन्वयालंकारस्य व्यवच्छेद्यत्वात्। अत एव "**त्वयि कोपो ममाभाति सुधांशाविव पावकः**" इत्यत्रोपमा सिद्ध्यति। अत्र पावकविशिष्टस्य चन्द्रस्योपमानत्वं यद्यप्यप्रसिद्धं तथापि कविकल्पनाप्रसूतश्चन्द्राधिकरणकोऽनलः संभावनामात्रविषय इति निराबाधैवात्रोपमेत्यल पल्लवितेन।

### कान्तेव दक्षा

**व्यामोहयन्ती विविधैर्वचोभि-**
**र्व्यावर्तयत्यन्यकलासु दृष्टिम्।**
**कालं महान्तं क्षणवन्नयन्ती**
**कान्तेव दक्षा कविता धिनोति॥**

—शिवलीलार्णवमहाकाव्यात्

स्वर्गीयः डा० श्रीगङ्गानाथझाः

# संस्कृते विदेशिशब्दाः



'विदेशिशब्दानां संस्कृतवाङ्मये प्रयोगविचार' इति विचारप्रसङ्गेन यत्किञ्चिद्विनिवेद्यते विदेशिशब्दानां संस्कृतवाङ्मये प्रयोगश्चिरन्तनसम्प्रदायानुमोदितस्त्वे वर्तते । तथाहि जैमिनीयमीमांसासूत्रे तृतीयपादे दशमसूत्रे यदधिकरणमारब्धः पूर्वपक्षः ।

"अर्थाबोधादप्रमाणं पिकालम्भनचोदना" इति अर्थात् पिकस्य आलम्भनं यत्र विहितं तद्वाक्यमप्रमाणम्, पिकशब्दस्यार्थस्याप्रसिद्धत्वेन तदर्थानवगमादिति तत्र सिद्धान्तः ।

'मैवम्, म्लेच्छप्रसिद्ध्यापि तद्बोधादविरोधिता' इति । अर्थात्— आर्येष्वप्रयोगेऽपि म्लेच्छेषु प्रयोगात् तदीयप्रसिद्ध्या पिकशब्दस्यार्थो ज्ञातुं सुकरः । अस्मादेतत् प्रतिभाति यत् पिकालम्भनचोदना सम्भाविता । यद्यपि पिकशब्दस्यार्थोऽप्रसिद्धः ततो म्लेच्छेषु प्रसिद्धेनैव तस्यार्थेन व्यवहार उचित इति ।।

'नेम' शब्दोऽर्धवाची—'तामरसशब्दः' पद्मवाची इत्यनयोरपि पिकशब्दवदर्थावगतिर्म्लेच्छप्रसिद्ध्यधीनैव ।

अस्त्येतन्मीमांसकानुशीलिता सरणिः । परन्तु अत्र स्थलेष्वेतत् समर्थनमिति न्यायानुसारेणेदानीन्तनैरस्माभिर्नवीनानामेतादृशानां शब्दानां प्रयोगः परिहरणीय एवेति समीचीनः पन्था इति ।।



श्रीमहावीरप्रसाद लखेड़ा

# विनयपत्रिका



गोस्वामितुलसिदासो हिन्दीसाहित्ये मूर्धन्यासनं समलङ्करोति । रामचरितमानसमस्य अतिप्रथितो ग्रन्थः । अस्मिन् महाकाव्येऽस्य कवि-प्रतिभा पूर्णतां प्राप्ता, अत्र चानेन समग्रापि भारतीयजीवनपद्धतिः समुन्मीलिता । अस्यैव भक्तशिरोमणेः भक्तिभावभरितानां पद्यानां संग्रहः 'विनयपत्रिका' इति नाम्ना समुपलभ्यते । अस्यां विनयपत्रिकायां गोस्वामिना तुलसिदासेन न केवलं स्वपरमाराध्यस्य भगवतो रामस्यैव अपितु अन्येषामपि देवानां भक्तिभावनोपेताः स्तुतयो विहिताः ।

भगवतः शङ्करस्य दानविधौ प्रसिद्धा कीर्तिः कियता वाग्वैदग्ध्येन समुपन्यस्ता महाकविना तुलसिदासेन तच्छृण्वन्तु भवन्तः । शिवसन्निधौ स्थितां भवानीं सम्बोध्य कथयति विधिः—

बावरो रावरो नाह भवानी ।
दानि बड़ो दिन देत दये बिनु, बेद बड़ाई भानी ॥
निज घर की बरबात बिलोकहु, हौ तुम परम सयानी ।
सिव की दई सम्पदा देखत, श्री सारदा सिहानी ॥
जिनके भाल लिखी लिपि मेरी, सुख की नहीं निसानी ।
तिन रंकन को नाक संवारत, हौं आयो नकबानी ॥
दुख-दीनता दुखी इनके दुख जाचकता अकुलानी ।
यह अधिकार सौंपिये औरहिं भीख भली मैं जानी ॥
प्रेम प्रसंसा-विनय-व्यंगजुत, सुनि बिधि की वर बानी ।
तुलसी मुदित महेस मनहि मन, जगत मातु मुसुकानी ॥

विक्षिप्तस्ते पतिः पार्वति । महान् स दाता अरातयेऽपि ददाति इत्यस्य रातिं सर्वेऽपि वेदाः समामनन्ति । परमप्रवीणासि त्वं, स्वगृहक्षेमं तावत् पश्य । शिवप्रत्तां सम्पत्तिं प्रेक्षं प्रेक्षं श्रीश्च शारदा च उभेऽपि ते तव भाग्यम् असूयतः । येषां ललाटे लेशमात्रमपि सुखं मया न लिखितं तेभ्योऽपि स्वर्ग एव अनेन दीयते इति नितरां कष्टापन्नोऽस्मि । दुःखदैन्येऽप्यनेन दुःखिते । याच्ञा तु वैकल्यमेव भजते । परभाग्यनिर्धारणरूपं ममाधिकारम् अन्येभ्यस्तावत् प्रदेहि । एतदपेक्षया त्वह भिक्षाटनमेव साधु मन्ये । ब्रह्मणः प्रशंसायुतां विनयव्यङ्ग्यपरां वाचमाकर्ण्य मुदितः शङ्करः, जगज्जननी च ईषद्हासमुखी जाता ।'

यद्यपि गोस्वामिना तुलसिदासेन सर्वेऽपि देवाः स्तुताः किन्तु तस्य विशेषा रुचिस्तु रामगुणवर्णने एव परिलक्ष्यते । तत्रैव तस्य हृदयस्य विश्रामः ।

**सुमिरु सनेह सहित सीतापति, रामचरन तजि न हि न आन गति ।**
**जप तप तीरथ जोग समाधी, कलिमति विकल न कुछ निरूपाधी ।।**
**करतहुं सुकृत न पाप सिराहीं । रकतबीज जिमि बाढ़त जाहीं ।**
**हरति एक अघ असुर जालिका । तुलसीदास प्रभु कृपा कालिका ।।**

रे मदीयमानस ! सस्नेहं सीतापतिं भज । रामचन्द्रचरणं विना न काप्यन्या गतिः । जपतपस्तीर्थयोगसमाधयः सर्वेऽपि कलिदोषदूषिताः । न कृतेनापि सुकृतेन दोषविनाश जायते । स तु रक्तबीज इव सततं वृद्धिं प्राप्नोति । एका प्रभुकृपारूपा कालिकैव अघरूपाणामसुरकदम्बानां संहारं करोति ।

भक्तशिरोमणिः भूयो भूयोऽपि तमेव देवं ध्यायति । औदार्ये न कोऽप्यन्यो देवः तस्य स्पर्द्धां कर्तुमलम् ।

**ऐसो को उदार जग माहीं ।**
**बिनु सेवा जो द्रवै दीन पर रामसरिस कोउ नाहीं ।**
**जो गति जोग विराग-जतनि करि नहिं पावत मुनि ग्यानी ।**
**सो गति देत गीध सबरी कहुं प्रभु न बहुत जिय जानी ।**

**जो संपति दस-सीस अरप करि रावन सिव पंह लीन्हीं ।**
**सो संपदा विभीषन कहं अति सकुच सहित हरि दीन्हीं ।**
**तुलसिदास सब भांति सकल सुख जो चाहसि मन मेरो ।**
**तौ भजु राम काम सब पूरन करैं कृपानिधि तेरो ।।**

क ईदृश उदारोऽस्मिन्जगति ? कोऽस्ति रामसदृशो यः सेवां विनैव द्रवति दीनेषु । महामुनयो ज्ञानिनश्चापि योग-विरागादियत्नैरपि यां गतिं प्राप्तुं न पारयन्ति तामेव गतिं शबरीगृध्राभ्यां ददाति । या च सम्पत्तिः दशशीर्षेण स्वशीर्षाणि समर्प्य सम्प्राप्ता सैव रामेण ससंकोचं विभीषणाय दत्ता । रे मनः ! सर्वथा सुखं वांछसि चेत् रामं भज । कृपानिधिः स समस्तानपि कामान् पूरयिष्यति ।

भावातिरेके भक्तशिरोमणेरात्मनिवेदनं न स्वस्मिन् माति । स आत्मानं पूर्णतयैव रामाय समर्पयति । सर्वमपि तस्य राममयं जातम् । आत्मनो रामस्य च मध्ये विविधान् सम्बन्धान् स एवं संभावयति—

**तू दयालु, दीन हौं, तू दानि, हौं भिखारी ।**
**हौं प्रसिद्ध पातकी, तू पाप-पुंज हारी ।**
**नाथ तू अनाथ को, अनाथ कौन मोसो ।**
**मो समान आरत नहिं आरति-हर तोसो ।।**
**ब्रह्म तू, हौं जीव तू है ठाकुर हौं चेरो ।**
**तात मातु, गुरु सखा तू सब बिधि हित मेरो ।।**
**तोहिं मोहिं नाते अनेक, मानिये जो भावै ।**
**ज्यों-त्यों तुलसी कृपालु चरन-सरन पावै ।।**

देव ! दयालुस्त्वम्, अहं चातिदीनः । त्वं दातासि, अहं च याचकः । प्रसिद्धोऽहं पातकी, त्वं च पाप-पुज-हारकः । त्वमनाथानां नाथो न च मादृशः कोऽप्यनाथः, न मत्समः कोऽप्यार्तः न च त्वत्समः आर्तिहरः । त्वं ब्रह्मासि, अहंच जीवः । त्वं स्वाम्यसि अहं ते दासः । त्वमेव माता, पिता, गुरुः, सखा, सर्वविधश्च हितकारकः । अनेके खल्वावयोः सम्बन्धाः । यथेच्छं कमप्येकं मानय, यथा तुलसिदासश्चरणयोराश्रय प्राप्नोतु ।

परमदार्शनिकोऽपि तुलसिदासो दार्शनिकान् समस्तानपि विवादान् परिहारयन् सृष्टिमिमां हरेः लीलारूपामेव मन्यते—

केशव कहि न जाइ का कहिये ।
देखत तब रचना विचित्र हरि, समुझि मनहिं मन रहिये ।
शून्य भीति पर चित्र रंग नहिं, तनु बिनु लिखा चितेरे ।
धोये मिटइ न मरइ भीति दुख पाइय यहि तनु हेरे ।
रवि-कर-नीर बसै अति दारुन मकर रूप तेहि माहीं ।
बदन-हीन सो ग्रसै चराचर पान करन जे जाहीं ।
कोउ कह सत्य झूठ कह कोऊ जुगल प्रबल कोउ माने ।
तुलसिदास परिहरै तीन भ्रम सो आपन पहिचाने ।।

केशव ! किं वदामि, न किंचदपि वक्तुं शक्यते । विचित्रां तव रचनां प्रेक्षं प्रेक्षं हे हरे ! अवगत्य च तां मनस्येव धारयामि । निराकारेण चित्रकारेण शून्य ! भित्तौ संसाररूपं चित्रं वर्णं विनैव लिखितम् । क्षालितमपि तदक्षालितमिव भवति, मृत्योरपि बिभेति च । तद्दृष्ट्वैव जीवो दुःखितो भवति । एतद् रविरश्मिजन्यमिथ्याजलमवेहि यस्मिन् दारुणः तृष्णारूपो मकरो निवसति । वदनरहितोऽपि स ये केचिद् जलं पातुं यान्ति तान् सर्वानेव ग्रसति । एनं कोऽपि सत्यमिति, अन्यो भ्रमरूपमिति, अपरश्च मिथ्यात्मकमिति मन्यते । य एव च भ्रमान् परिहरति स एव आत्मानं जानाति ।

( प्रयाग-आकाशवाणी-सौजन्यात् )

श्रीरश्मिकान्त व्यास रश्मिः

# राष्ट्रकविः कालिदासः



राष्ट्रशब्दस्य श्रवणेन मननशीलमानवस्य मानसपटले राजनीतिक्याः सांस्कृतिक्याः आध्यात्मिक्याः भौगोलिक्याः ऐतिहासिक्याश्च राष्ट्रस्याखण्डतायाः प्रतिमा साकाररूपेण आगच्छति । कस्यचित् कवेः राष्ट्रियता राष्ट्रप्रेम च तस्य साहित्ये, निहितराष्ट्रियस्थिरभावनाया वा विचारधाराया एव सम्भवम् । यदि राष्ट्रस्य जनजीवनं संस्कृतिमाध्यात्मिकदर्शनञ्च तथा तात्कालिकसामाजिकार्थिकशासन-व्यवस्थां च कवेः सम्वेदनशीलहृदयमाकर्षति तदा स निस्सन्देहं राष्ट्रकविः नान्यथास्ति ।

भव्यभारते भिन्नभिन्नभाषावेशभूषाभावेषु वर्तमानेष्वपि तस्य सांस्कृतिक-स्वरूपस्यैकरूपता एकस्वरूपं प्रयच्छति ।

कविकुलगुरुः कालिदासस्य साहित्ये राष्ट्रस्य सभ्यतायाः आध्यात्मिकतायाः भारतीयसंस्कृतेः च दर्शन भवति । भूतभावनभगवतः अष्टमूर्तेः शिवस्य रूपे गुह्यरूपेण सः अखण्डभारतस्यैव रूपं निरूपयति ।

यथा अभिज्ञानशाकुन्तलस्य अधः श्लोके—

**"या सृष्टिः स्रष्टुराद्या वहति विधिहुतं"**

अनेन वैयक्तिकरूपेण स शैवमतावलम्बी किन्तु वैष्णवस्य निन्दां न करोति । "कुमारसम्भवे" उद्घोषणं यत्— **"एकैव मूर्तिर्विभेदे त्रिधा सा ।"**

महाकवेः साहित्ये समाजस्यापि वर्णनं भूयशः विलोक्यते । विना समाजेन-राष्ट्रं पङ्गु अस्ति साहित्यं तु समाजस्यैव दर्पणं वर्तते, तत्र च मानवहृदयस्य स्पन्दन वर्तते, अस्माकं विश्वविदितः कालिदासोऽपि तैत्तिरीयोपनिषदः स्वरेण ।

"तेनत्यक्तेन भुञ्जीथाः मागृधः कस्यस्विद्धनम्" गायति । यथा रघुवंशे आद्यसर्गे—

**"त्यागाय संभृतार्थानां सत्याय मितभाषिणाम्"**

"यथा राजा तथा प्रजा" उपर्युक्तेनादर्शेन राष्ट्रस्य कल्याणं सम्भवम् । रघोः कौत्साय गुरुदक्षिणाप्रदानमपि त्यागस्योक्तमुदाहरणं विद्यते ।

कविता जीवनस्य भावात्मिका व्याख्या वर्तते । कवेः कालिदासस्य कविता-कामिनी पाठकस्य हृदये रागात्मिकां क्रीडां दयां, त्यागं चान्ततोगत्वा भूर्लोक स्वर्लोकयोरानन्दं निदधाति । तस्य शकुन्तला प्रणयिनी सती तपस्विन्यपि वर्तते ।

शकुन्तलायाः गान्धर्वविवाहेन वयस्कविवाहबहुविवाहप्रथया च, पुत्रार्थं गोसेवाद्यनुष्ठानेन तात्कालिकलोकप्रवृत्तिरपि आलक्ष्यते ।

एकतः तस्य साहित्ये गङ्गा-यमुना-शिप्रा-वेत्रवती-सिन्धु-ब्रह्मपुत्रादिनदीनां भारतव्यापिनीनां वर्णनमुपलभ्यते । अन्यतश्च विन्ध्यहिमालयगन्धमादनादिपर्व-तानां प्रसङ्गो दृश्यते ।

यथा कुमारसम्भवे—

**"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः"**

मेघदूते—**शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः**

तस्य "रघुवंशं" राष्ट्रियकाव्यस्य स्वरूपमेवास्ति । तस्मिन् काव्ये नृपस्य कर्त्तव्यम् भारतीयसंस्कृतेः गौरवगाथायाः स्पष्टं चित्रं परिलक्ष्यते । तस्मिन् समये नृपः प्रजायाः पुत्रवत् पालनमकरोत्

यथा रघुवंशे—

**"प्रजाः प्रजानाथ पितेव पासि"**

**स पिता पितरस्तासां केवलं जन्महेतवः**, प्रजायाः सन्तोषाय कल्याणाय च दण्ड एकावश्यको राजधर्मो वर्तते । यथा—स्थितेः दण्डयतो दण्ड्यान् (रघु०) । कविः नृपस्य योग्यतां वर्णयित्वा कथयति—

**शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।**
**वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ।।**
**आकारसदृशी प्रज्ञा प्रज्ञया सदृशागमः ।**
**आगमेन सदृशारम्भ आरम्भे सदृशोदयः: ।।**

प्रजानां कल्याणायैव नृपः करग्रहणं करोति। युगवाणी कालिदासं छायेवानु सरति। तस्य वाणी अमरसन्देशस्य राष्ट्रस्य शाश्वत–विचारस्य च प्रतीकोऽस्ति। कविः शासकवर्ग सबोध्य कथयति—

**"प्रवर्ततां प्रकृतिहिताय पार्थिवः"**

( अभिज्ञानशाकुन्तले )

यदि शासकवर्गः भोगविलासे निमज्जति तदा तस्य विनाशोऽवश्यम्भावी इत्यग्निवर्णस्योदन्तेनावगम्यते।

येन केन प्रकारेण महाकविः कालिदासः रामस्य विमानयात्रायाः मिषेण, मेघदूतव्याजेन रघोः दिग्विजयस्यच्छलेन सविस्तरं भारतस्य वर्णनं करोति। अनेन प्रकारेण कालिदासेन समग्रभारतस्याखण्डतायाः कल्पना कृता। प्राचीनभारतीया संस्कृतिः वैदिकी संस्कृतिः एवासीत्। तत्र वसुन्धराया मातृवत् परिकल्पना उपलभ्यते। यथा–माता भूमिः पुत्रोऽहं पृथिव्याः। तथैव विहङ्गादिषु सहोदरभावो वृक्षेषु च पुत्रवात्सल्यं संलक्ष्यते।

यथा रघुवंशे—

**"अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन"**

महाकविः न केवलं शृङ्गारवर्णने निपुणः अपितु राष्ट्रचेतनायाः प्रेरकपुरुषोऽप्यस्ति।

यदि अस्माकं शासकवर्गः कवेः साहित्यानुसारं कर्तव्यं निर्वोढुं समर्थः स्यात् तदास्माकं भारतं स्वगौरवं पुनः लब्धुं समर्थं भवेत्।



डा० हरिदिवेकरः

# ऋग्वेदपुरुषसूक्तस्था एका विसंगता ऋक्



ऋक्संहितायाः दशमे मण्डले नवतितमं सूक्तं कथ्यते पुरुषसूक्तमिति । निखिलेषु ऋक्सूक्तेषु अस्य सूक्तस्य पाठः प्राचुर्येण भवति । उपयनयनानन्तरं बटोर्वेदाध्ययनं प्रायशः प्रारभ्यते सूक्तेनानेनैव । यतः यस्य कस्यापि देवस्य पूजायां ये षोडशोपचाराः समर्प्यन्ते, ते -सर्वे अस्य सूक्तस्य एकैकया ऋचा संबद्धा वर्तन्ते—यथा सहस्रशीर्षेति प्रथमया ऋचा आवाहननामा प्रथमोपचारः क्रियते, यज्ञेन यज्ञमित्यन्त्यया ऋचा अन्तिमोपचारः क्रियते, मन्त्रपुष्पाञ्जलिसमर्पणनामकः । सुविज्ञातमेतद्देवपूजाकर्तुकामानाम् । अत एव विशेषेण पठ्यते सूक्तमेतद्देवपूजोपयुक्तम् ।

अस्मिन् सूक्ते या ऋचो वर्तन्ते तासामर्थस्य ताभिः समर्पितानामुपचाराणां च नास्ति दूरतोऽपि कोऽपि संबन्धः । यथा धूपसमर्पणकाले पठ्यते 'यत्पुरुषं व्यदधुः' इत्येषा ऋक् । अस्यां धूपोपसूचकं नैकमपि पदमस्ति येन तस्योपचारस्य विषये एषैव ऋक्संबद्धा भवितुमर्हति नान्या । सर्वासामेवासामृचामर्थेन न कोऽप्युपचारः सार्थकत्वेन संबध्यते । न ज्ञायते केन कदा वा पूजाविधौ निबद्धा ऋच एताः । किं तु श्रीशङ्कराचार्यैः यदा पञ्चायतन-पूजा प्रवर्तिता तस्मात्कालादारभ्य अद्यावधिपर्यन्तं देवपूजाविधौ प्रयुक्तमस्त्येतत्पुरुषसूक्तमित्यस्मिन्विषये न वर्तते कोऽपि संशयः । संभवतः यदा उपचाराणां संख्या-षोडशेति निश्चिता तदा षोडश-ऋगात्मकमेतत् समानसंख्या-सामर्थ्याद् देवपूजायां विनियुक्तमिति भाति ।

पुरुषसूक्तस्थानामृचां पूजोपचाराणां च अर्थतः अविद्यमानेऽपि संबन्धे पुरुषसूक्ते ता ऋचोऽर्थतः सुसंगता एव । अतः सूक्तस्थानामृचामर्थसंबन्धो द्रष्टव्य एव । अस्य सूक्तस्यावतरणिकैवंप्रकारका । "सहस्रशीर्षा षोडश नारायणः

पौरुषमानुष्टुभं त्रिष्टुबन्तं तु"। अतः स्पष्टमेव ज्ञायते यत्सहस्रशीर्षेति पदेन यत्सूक्तमारभ्यते तस्मिन्वर्तन्ते ऋचः षोडश। तस्य सूक्तस्य ऋषिर्नारायणनाम्ना। एतत्सूक्तं पुरुषदेवताकम्। अन्तिमा ऋक् त्रिष्टुप्-छन्दःस्था। अन्याः सर्वा आनुष्टुभः इति। कथमुत्पन्नं जगदिदमिति विचार्यमाणे नारायणेन नाम ऋषिणा या कल्पना कृता, सैवास्मिन् सूक्ते वर्णिता भवति।

आद्ये ऋक्चतुष्के वर्ण्यते कश्चिज्जगदादिपुरुषः सहस्रशीर्षा, सहस्राक्षः, सहस्रपादिति। तस्यैकः पादः, अर्थात् चतुर्थोऽशः कालत्रयवर्तीनि विश्वानि भूतानि, अवशिष्टं त्रिपात्-स्वरूपं दिवि वर्ततेऽमृतरूपेण। आदिपुरुषात्तस्मात् ब्रह्माण्डदेहो विराडजायत। तमेव विराड्देहमधिकरणं कृत्वा तत्र जीवस्वरूपेण प्रविश्य स देवतात्मा जीवोऽभवदिति पञ्चम्यामृचि कथितम्। तदेव जीवस्वरूपं पुरुषं मनसा हविष्ट्वेन संकल्प्य देवैः प्रथमो मानसो यज्ञः संपादितः। तस्यैव यज्ञस्य वर्णनं षष्ठीमृचमारभ्य दशमी-पर्यन्तं कृतमस्ति। तस्मादेव सर्वहुतो यज्ञात्पशवः संजाताः, ऋचः सामानि यजूंषि च उत्पन्ना इति कथितम्।

एकादश्यां 'यत्पुरुषं व्यदधुः' इत्यस्यामृचि हविष्ट्वेन संकल्पितस्य पुरुषस्य विषये पृष्टाः केचन प्रश्नाः। तस्य पुरुषस्य मुखं किम्, बाहू कौ तथा ऊरू पादौ च इति चत्वारो विशेषरूपाः प्रश्नाः, कतिधा विकल्पना कृतेत्येकः सामान्यरूपः। चतुर्णां विशिष्टप्रश्नानामुत्तरं द्वादश्यामृचि दत्त्वा त्रयोदश्यां चतुर्दश्यां च ऋचि 'चन्द्रमा मनसो जात' इत्यारभ्य 'अकल्पयन्' इतिपर्यन्तं विद्यन्ते सामान्यस्य प्रश्नस्योत्तराणि। 'कतिधा व्यकल्पयन्' इत्यस्य प्रश्नस्य विस्तरेण वर्णनं कृत्वा 'अकल्पयन्' इति पदेनोत्तरमुपसंहृतम्। सर्वमेतद्वर्णनं सुसूत्रं सुसंवादयुक्तं च।

अथ पठ्यते उपान्त्या ऋक् 'सप्तास्यासन्परिधयः' इति। अत्र अस्येति सर्वनामपदस्य पूर्वासु चतसृषु ऋक्षु वर्णितस्य पुरुषस्य च न वर्तते कोऽपि संबन्धः। अत एव सायणाचार्येण अस्येति पदस्य सांकल्पिकयज्ञस्येत्यर्थः कृतः। अर्थात् अस्या ऋचः स्थानं 'यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः' इत्यस्या ऋचोऽनन्तरमेव युक्तं, नात्र, इति स्पष्टमेव प्रतीयते। तस्मादस्या ऋचः पाठस्तत्रैव कर्तव्यो नात्र। तत्रेयं

सुसंगता । अत्र विसंगता । एव । तस्मात् युक्तमेवास्या ऋचः स्थापनं तत्रैव षष्ठ्या ऋचोऽनन्तरम् ।

एषा मे सूचना परम्परापूजकानां वैदिकानां मान्या न भविष्यति, इति जानन्नपि तेषां पुरत एकमेवाधारं प्रदर्श्य विरन्तुकामोऽस्मि । अयं मे विचारः अन्यैर्वेदैः समर्थितोऽस्ति । अथवा सुवचमिदमेव यद्वेदान्तरे अस्य पुरुषसूक्तस्य यद्रूपं दृश्यते तेनैवायं विचारो मे मनसि प्रादुर्भूत इति । कृष्ण-यजुर्वेदस्याऽऽरण्यक-खण्डस्य तृतीये प्रश्ने द्वादशे अनुवाके वर्तते पुरुषसूक्तमिदम् । तत्र 'यत्पुरुषेण हविषा'इति 'सप्तास्यासन्परिधय' इत्येते द्वे ऋचे सनिहिते अनेनैव क्रमेण वर्तेते । कृष्णयजुर्वेदस्य दुरूहतां दूरीकर्तुमभवच्छुक्ल-यजुर्वेदावतारः । तत्रापि एकत्रिंशे अध्याये वर्तमाने पुरुषसूक्ते अनयोर्ऋचोः कृष्णयजुर्वेदे प्रदर्शित एव क्रमोऽस्ति । एवं स्वयं द्वाभ्यां वेदाभ्यामङ्गीकृते सुसंवादयुते पाठे, ऋग्वेद-पाठे परिवर्तनं न कार्यं विसंगत एव पाठो रक्षितव्य इत्येष आग्रहः कियान् युक्त इति पाठकैरेव विचारणीयम् ।

अथ कथमपि विसंगतः पाठो ऋग्वेदसंहितायां प्रविष्टः स्यादिति विचारोऽपि न भवेदयुक्तः । केवलं मौखिक-पाठ-परम्परायां स्वीकृतायां सप्तास्यासन्निति सप्तमी ऋक् कथंचिदपि पञ्चदशी न भवेत् । एवंभूतः प्रमादः लिखितानुलेखने स्वीकृते एव सभाव्यो भवति । "पुरुषसूक्तलेखन-समये लेखकेन सहस्रशीर्षेत्यारभ्य ग्रीष्म इध्मः शरद्धविरित्यन्तः षड्ऋचात्मको भागः लिखितः । ततः सप्तास्या-सन्निति ऋक् तस्य दृष्टिपथात् भ्रष्टा । अज्ञात्वैवैतं भ्रंशं तेन तं यज्ञं बर्हिषि प्रौक्षन्नित्यारभ्य तथा लोकाँ अकल्पयन्निति ऋगष्टकं लिखितम् । सूक्त-समाप्ति-समये लेखकेन ऋचां गणना कृता । सा चतुर्दशसंख्यात्मिकैवाभूत् । ततो ज्ञाते भ्रंशे भग्नपदं कृत्वा, सप्तास्यासन् परिधयः इति ऋक् लिखिता । 'यज्ञेन यज्ञ-मयजन्त' इति ऋचा समापितं लेखनम् । अनन्तरं पाठकैस्तत्सूक्ष्मं काकपदं न लक्षितम् । तेन विसंगत एव पाठक्रमः स्वीकृतोऽभवत् ।' एवं भूतायामेव कृतायां कल्पनायामेषा विसंगतिः समाधातुं योग्या भवति, अन्यथा न, इति शम् ।

●

पण्डित केदारनाथ ओझाः

# संभावनम्



संभावनं नाम ज्ञानमलंकारलक्षणेषु प्रविष्टं लोकव्यवहारविश्रुत नैकैः प्राक्तनैश्चर्चितं कीदृशम् इति समासतो विवेचयितु यथामति प्रयते।

**संभावनं यदित्थं स्यादित्यूहोऽन्यस्य सिद्धये।**
**यदि शेषो भवेद् वक्ता कथिताः स्युर्गुणास्तव ।।**

इत्यादिरीत्या अन्यसिध्यनुकूल-ऊहस्तर्कविशेषः संभावन ज्ञानमिति आयाति। व्याप्यारोपेण व्यापकारोपस्तर्क इति तर्कसंग्रहानुसार संभावनस्य आरोपरूपता च फलति। 'यदि इत्थं स्याद्' इति तस्य व्यवहारपरिचयवाक्यम्। शेषो यदि वक्ता स्यात् तव गुणाः कथिताः स्युरिति तदुदाहरणम्। धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यात्, अस्ति च वह्निजन्यस्तस्मान्नास्ति वह्निव्यभिचारी इति रीत्या यदि तव गुणाः कथनीयाः स्युस्तर्हि अन्येषामशक्ततया शेषो वक्ता स्यात्। नास्ति शेषो वक्ता तदा अनन्ततया विलक्षणतया वा तव गुणाः न कथनीया इत्यूहः। एवमारोपरूपतया तदभाववति तत्प्रकारक ज्ञानं संभावनं फलितम्। आरोपात्मकं ज्ञानं संभावनशब्दस्यार्थः। अन्यसिध्यनुकूल—इत्यादि-विशेषणस्य तु अलङ्कारसभावन परिचायकतयोपयोगः प्रतिभाति।

कारकसिद्धान्तकौमुदीग्रन्थस्य 'अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु' इति सूत्रस्योदाहरणेऽपि आरोप एव संभावना आयाति। संभावनाविषयस्य अस्-धात्वर्थभवनस्य दौर्लभ्यमुक्तम्। दौर्लभ्यञ्च असत्त्वप्रयुक्तम् इति सर्पिषोऽपि स्यादित्युदाहरणे स्फुटम्। अपि स्तुयाद्विष्णुमित्यत्र विष्णुकर्मकस्तवनस्या-भाव एव परिशिष्यते। अत एव तत्र 'संभावनं शक्त्युत्कर्षमाविष्क-र्तुमत्युक्तिः' इत्युक्तिः। विषयमतिक्रम्य विषयाभावे यथोच्यते तथा नास्ति तथापि

तथोक्तिरिति तदर्थः। व्याख्यातारोऽपि अवाङ्मनसगोचरं विष्णुमपि स्तुया-दित्यधिकोक्तिः, एतादृशस्यान्यदीयस्तवने सामर्थ्यमस्तीत्यत्र किं वक्तव्यम्; इति ब्रुवते। इत्यतोऽन्यसिद्ध्यनुकूलताऽपि स्फुटेति। एवं 'संभावनेऽलमिति चेत् सिद्धाप्रयोगे' इति सूत्रव्याख्यायां 'संभावनं क्रियासु योग्यताऽध्यवसायः, इत्युक्तम्। तेन अपि स्तुयाद् विष्णुमित्यादौ स्तुतियोग्यतानिर्णयमात्रं फल तथा प्रतिपादनस्य। भवति च प्रत्येकं कारणस्य योग्यता, कार्योत्पत्तिश्च सामग्र्यधीना, अतो नावश्यं तथा कार्यम्।

राम स्निग्धतरं श्यामं विलोक्य वनमण्डले।
प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः॥

इत्यत्र संभावनादपि ज्ञानात् केकिनां नर्तन कार्यं स्वीकरोति उत्प्रेक्षाप्रकरणे पण्डितराजः। तथा च आरोपात्मकेऽपि संभावनज्ञाने अन्यारोपविलक्षणं कार्योत्पादनमन्यसिद्ध्यनुकूलता च सिद्ध्यति। रामं स्निग्धतरमित्यत्र न भ्रान्तिः भ्रान्त्युदाहरणतया 'धाराधरधिया धीरं नृत्यन्ति स्म शिखावलाः' इति तेनैव विपरिणमनात्।

अतिशयोक्तेस्तृतीयभेदं 'यद्येवं स्यात्तथापत्तौ' इति वर्णयन् संभावना-लङ्कारञ्च तत्रैवान्तर्भावयन् असत्यार्थकम् आरोपात्मकमेव ज्ञानं संभावनमभि-प्रैति अलङ्कारकौस्तुभकृद् विश्वेश्वरपण्डितः। परं लेखे असंभावितशब्दो-ल्लेखेन न स्फुटं प्रदर्शयितुमशकत्। तथाहि तस्य लेखः—तृतीयभेदेऽपि कथञ्चिद् संभावितार्थकल्पनप्रतिपत्तिरेव विवक्षिता। यथा अस्य क्षोणीपतेः परार्धपरया इत्यादि प्रसिद्धं पद्यम्। ततः परम् 'एतेन' इति कृत्वा 'संभावनं यदीत्थम्' इत्यादि—पृथगलङ्कारत्वमपास्तम्' इत्यन्तेन। एवं सोपज्ञटीकायां विश्वेश्वरपण्डित एव—संभावनञ्च साधारणधर्मदर्शननिमित्तक प्रकृतविशेष्यक तादात्म्यसंस-र्गकमप्रकृतप्रकारकं निश्चयानात्मकं ज्ञानमिति लिखति। तत्र साधारण-धर्मदर्शननिमित्तकं निश्चयानात्मकं ज्ञानमिति संशयसाधारणं संभावनस्य लक्षणम्। अन्यच्चोत्प्रेक्षालक्षणाभिप्रायेण। यतः 'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति अप्रकृतपदघटितं लक्षणं काव्यप्रकाशे ब्रूते।

इदं पण्डितराजस्योत्प्रेक्षालक्षणसूत्रम्—तद्भिन्नत्वेन तदभाववत्त्वेन प्रमितस्य पदार्थस्य रमणीयतद्वृत्तितत्समनाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सभावनम् उत्प्रेक्षा । अत्र संभावनं पदं सामान्यज्ञानार्थकं प्रतिभाति । प्रमितान्तस्य आहार्यतागमकतां स्वयं ब्रूते । अन्यतरतद्धर्मपदेन संशय इव ज्ञानस्य निमित्तं सूचयति । लोकोत्तरप्रभावं तं मन्ये नारायणं परम् इति संभावनज्ञानस्योदाहरणं ददाति । लोकोत्तरप्रभावस्य नारायणत्वव्याप्यतासंभावनं विवृणुते । संभावनतया च अनुमितिं वारयति ।

ततोऽनुमित्युपयोगिनो व्याप्तेर्निश्चयाद् वै सूचितम् । भ्रान्तेरपि वैलक्षण्यं सम्भावनस्याङ्गीकरोति । रूपकवित्तादावतिप्रसङ्गवारणाय संभावनमिति वदन् पण्डितराज आहार्यादपि वैलक्षण्य संभावनस्य व्यक्तीकरोति, यतो भिन्नयोरुपमानोपमे ययोराहार्यतादात्म्यनिश्चयो रूपकम् ।

अयथार्थज्ञानस्य 'संशय-विपर्यय-तर्काः' त्रयो भेदाः प्रसिद्धाः । त्रितयवैलक्षण्यं संभावनज्ञाने पूर्वोक्तरीत्या आयाति, संशय इव समविरुद्धकोटिद्वयं नास्ति, विपर्यये भ्रान्तौ आहार्यता नास्ति, संभावने आहार्यता विद्यते । तर्क इव सर्वत्र अन्यसिद्ध्यनुकूलता व्यापकबाधनिश्चयादिर्नास्ति । एवं विवेचने त्रितयसाम्यमपि वर्णयितुं शक्येत । तथा च कीदृग्लक्षणं संभावनज्ञानमित्यवशिष्यते एव ।

अतएव रसगङ्गाधरव्याख्याने नारायणेनानेन भवितव्यमिति पण्डितराजसाक्षिको जातिविशेषोऽथवा 'कदाचित् सम्पद्येत' इत्यादिसाधारणप्रतीतिसाक्षिकजातिविशेषः संभावनत्वमिति लिखितवानस्मि । अन्यत्र च अप्रामाण्यशङ्काकवलितं निश्चयानात्मकं ज्ञानं संभावनमिति मम लेखे वर्तते ।

प्रशस्तपादीये अनध्यवसायोऽपि तृतीयोऽविद्याभेदोऽङ्गीकृतः, किरणावल्यां न्यायलीलावत्यादौ च वर्णितः । न्यायपञ्चाननादय आलङ्कारिकास्तमेव संभावनमामनन्ति । विशेषतोऽनुल्लिखितनानाकोटिकं हि ज्ञानं संभावनम् । कोटीनामुल्लेखाभावे एकस्याः कोटेर्वा अनुल्लेखे कोटीनां सामान्यत उल्लेखेऽपि विशेषतोऽनुल्लेखे सर्वथापि अनध्यवसायः पनसफलं विशेषतोऽपरिचिन्वतो विदेशीयस्य किंस्विदयम् इति ज्ञानं यथा किं शब्दप्रयोगादनिश्चयात्मकमिदम् । परं कोटेर्भानं नास्ति ।

अयमिति तु धर्मिनिर्देशः। अतो विशेषतः कोटेरनुल्लेखात् संशयो न किन्त्वनध्यवसायः। किं पनसः स्विदयमित्युदाहरणे पनसत्वकोटेरुल्लेखेऽपि अपरकोटेः किञ्चित्त्वेनोल्लेखाद् विशेषत उल्लेखाभावाल्लक्षणगमन्वयः। मन्ये मुखं चन्द्र इत्याद्युत्प्रेक्षायां मुखत्वचन्द्रत्वकोट्योः शाब्दबोधे भानेऽपि इदं चन्द्र इति एकचन्द्रत्वकोटिकसंभावनज्ञानस्यैव अलङ्कारताप्रयोजकत्वात् तस्य च शाब्दबोधोत्तरं सुलभात्।

तत्राहं ब्रवीमि—मन्ये मुखं चन्द्र इत्यत्र मुखत्वचन्द्रत्वयोः कोटित्वेन भानं नास्ति, चन्द्रस्य तादात्म्येनोत्प्रेक्षायां धर्मितावच्छेदकतया उद्देश्यतावच्छेदकतया वा मुखत्वस्य भानम्। तादृशमेव इदं चन्द्र इति ज्ञानम्। मुखस्येदन्त्वेनोद्देयतेति विशेषः।

यदपि अनुपलब्धपक्ष—विपक्ष—सपक्ष—सहचारस्य असाधारणधर्मस्य दर्शनम् अनध्यवसाये कारणं संशये चोपलब्धस्येत्यादि तदपि न मनोरमं संभावने ज्ञाने विषयविषयिसाधारणस्यैवोपयोगो न तु अन्यत्र सहचारस्य।

आलङ्कारिक एव चक्रवर्तिमहोदयोऽनध्यवसायाद् भिन्नमेव संभावनमङ्गीकरोति परं संभावनस्य स्फुटलक्षणं किमपि न प्रदर्शयति; आहार्यतामात्रं ब्रूते।

ये तु अनध्यवसायं सम्भावनं वा अतिरिक्तं नाङ्गीकुर्वन्ति किन्तु संशयविपर्ययावेव तेषां संशये विपर्यये वा संभावनस्य कुत्र कथमन्तर्भाव इति अवशिष्यत एव।

अलङ्कारकौस्तुभस्तु संभावनपदस्य उत्कटकोटिकसंदेहार्थकतां ब्रूते। तथा च तन्मते संशय एव संभावनस्यान्तर्भावः। संशयो द्विविधः, उत्कटकोटिकोऽनुत्कटकोटिकश्च। प्रथमः संभावनम्। तथा च संशयविशेषः संभावनम् उत्कटत्वञ्च कोटौ निर्वचनीयम्। संशये 'अयं स्थाणुः पुरुषो वा' इत्यादौ अयमिति धर्मिनिर्देशः। स्थाणुत्वपुरुषत्वयोः कोटित्वेन व्यवहारः, तत्रैव एकत्र उत्कटत्वं वर्णनीयम्। अपेक्षणीया कोटिरुत्कटेत्यवैमि। समीहितस्यैवापेक्षाज्ञानं जायते, यत्र संशयेऽन्यतरकोटेरुपेक्षा अपेक्षा वा नास्ति स संशयः समकोटिकः। प्राचीनन्यायग्रन्थे संशयलक्षणे 'विशेषापेक्षः' इत्युपलभ्यते। यद्यपि विभिन्नरूपेणापि

तद्व्याख्यानं तथापि साक्षात्परम्परया वा अपेक्षासम्बन्धोऽनुभूयते, अपेक्षाविरहे संशय एव नोदेति। किन्तु क्वचित् निर्णयमात्रस्यापेक्षा उभयोरेव वा अपेक्षा तत्र समा कोटिः, यत्र तु अवान्तरस्यैव अपेक्षा, तत्रोत्कटकोटिरित्यवधेयम्।

अहन्तु उत्प्रेक्षादिस्थलीयसंभावने कोटिद्वयमेव नानुभवामि, किन्तूद्देश्यविधेय-भावेनान्वय इत्युक्तप्रायोऽस्मि, विरुद्धयोरुभयोर्युगपदभाने एव कोटिताव्यवहारः। संशये विरुद्धयोरुभयोर्विरुद्धत्वेन भानमन्यथा समुच्चयः स्यात्। संभावने विरुद्धयो-रुद्देश्यतावच्छेदकविधेयतावच्छेदकयोर्यद्यपि भानं परं न विरुद्धत्वेनेति दिशि सूक्ष्मा दृक् प्रसारणीया।

आहार्यताऽप्यस्य संभावनस्य विलक्षणैव। बाधकालीनं हि इच्छाजन्यं ज्ञानमाहार्यं प्रसिद्धं। बलवत्तरविपरीतनिश्चयस्य बाधनिश्चयस्य सत्त्वे प्रकृत-ज्ञानं कथमपीच्छावशाज्जायतां नाम परं बाधकवलितं ज्ञानं कथं चमत्कारं जनयेत्? बाधितस्य ज्ञानाय कथमिच्छापि भवेत्? जानाति तत इच्छतीति रीत्या इच्छां प्रति ज्ञानस्य कारणत्वप्रसिद्धौ अत्र इच्छया ज्ञानोत्पादवर्णनं कथन्न विरुध्यत इति बहु विचारणीयं तथापि समासतः किञ्चिद् वर्ण्यते।

बधितज्ञानादपि चमत्कारोदया, रूपकादावपि आहार्यमेव ज्ञानम्, परं विभिन्नं कार्यम्। यथा लोके गालीप्रदानादिना क्रोधादेर्बाधितातिशयप्रशंसया च स्मितादेरु-दयः। काव्यादौ च सहृदयस्य चेतसश्चमत्कारप्रवणता चमत्कारिशब्दार्थरचना-दिभिः समेषां समाधानात्। चमत्कारिवस्तूपस्थापनायैव उत्प्रेक्षासंभावनायां लक्षणवाक्ये रमणीयतद्वृत्तितत्समानाधिकरणधर्मनिमितकत्वं रसगङ्गाधरे निवे-शितम्। चमत्कारजनकज्ञानविषयीभूतं वस्तु रमणीयमुच्यते। अन्यत्र हृदया-वर्जकं रमणीयं वर्तते। तेन चेतसश्चमत्कारप्रवणता सूच्यते।

तत्रैवं मम प्रतिभाति—उत्कटचमत्कारसाधनं ज्ञानं बाधनिश्चयो न प्रति-बध्नाति उत्कटचमत्कारसामग्रीविरहितो हि बाधनिश्चयः प्रतिबन्धको न तु तादृशसामग्रीसत्त्वे। अथवा बाधनिश्चयो न प्रतिबन्धकः किन्तु स्व-विरोधिज्ञाने अप्रामाण्यज्ञानोत्पादकः, वर्णिता चैषा रीतिर्बहुषु ग्रन्थेषु। एनामेवाश्रित्य संभा-वनं लक्षितम्। तथा च बाधनिश्चयेऽपि काव्यादौ शब्दबोधो जायत एव। बाधकव-

लिताय चमत्कारिज्ञानायापि चमत्कारानुरोधेनैव इच्छाया उत्पादात् । विषयती-सम्बन्धेनेच्छां प्रति विषयतासम्बन्धेन ज्ञानस्य कारणत्वम् । समानविषयकत्वेनेति भावः । प्रकारान्तरेण इच्छाया अपि ज्ञानमनुमित्यादीन् प्रति कारणत्वं नैकस्थलेषु वर्णितमस्ति ।

अहन्तु, चमत्कारिज्ञानस्य आहार्यतां न रोचये । आहार्यतोऽपि निकृष्टम् असंभविपदेन उत्प्रेक्ष्यं संभवनीयं वस्तु व्यपदिशन्ति कतिपये आलङ्कारिकाः । यथा काव्यप्रदीपः—संभविनोऽर्थस्य तादृशासंभविवस्तुरूपतया संभावनमुत्प्रेक्षा । संभविनो लोकसिद्धस्य, असंभवि लोकसिद्ध्यभावेऽपि कविप्रतिभामात्रकल्पितम् इति तद्व्याख्या । मन्ये मुखं चन्द्र इत्यादौ तादात्म्यस्य असंभवित्वम् ।

**स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः**<br>
**स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भावनिहितः ।**<br>
**स्रवन्मन्दाकिन्या प्रतिदिवससक्तेन पयसा**<br>
**कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ।**

इत्यादौ इन्दौ संभाव्यमानः कपालाङ्कुरोऽसंभवी कविप्रतिभामात्रकल्पित इति वर्णयन्ति । तत्र कपालमङ्कुरश्च पृथक्प्रसिद्धावेव, कपालाङ्कुरयोः सम्बन्ध एव कल्पितः । सर्वथाऽसंभवि वस्तु वर्णितं सामाजिकचेतसि नावतरेत्, अस्य क्षोणीपतेः परार्धपरयेत्यादिपद्यस्थ-प्रज्ञाचक्षुरवेक्षणीय-बधिरश्रव्यः वन्ध्याजातमूकगेयादिपदार्थवत् सर्वथाऽसत्त्वधिया चमत्कारपुष्टिर्न स्यात् । अन्यथा स्वर्गनरकाद्यद्भुतवर्णनं काव्यापेक्षया अधिकप्रियं स्यात् । किन्तु सामाजिकवासनाविषयसजातीया एव पदार्थाः कविप्रतिभागुणगुम्फिता नूतना भवन्ति चेतश्चमत्कुर्वन्ति, अतः संभावनीयं वस्तु संभावनं ज्ञानञ्च न सर्वथा असद् असद्विषयकञ्च ।

डा० जयशङ्कर त्रिपाठी

# आधुनिकसंस्कृतमहाकाव्यं पारिजातहरणम्



संस्कृतभाषायाः संजीवनस्यैतत् प्रमाणं यदधुनाऽपि अस्यां शास्त्रचिन्तनं साहित्यलेखनम् अध्ययनानुशीलनस्य नूतनोन्मीलनञ्च भवन्ति। यस्मिन् लौकिकसंस्कृते व्यासो जयकाव्यं रचयामास, कालिदासस्य अमृतोपमानि काव्यानि सञ्जातानि, यस्मिन्नेव आदिशङ्कराचार्यस्य दर्शनचिन्तनानि विद्योतन्ते, यस्मिन्नेव श्रीमद्भागवतमहापुराणस्य भक्तिः मधुरं गायति, तस्मिन्नेव अधुनातः प्राक् द्वित्रशताब्देषु पण्डितराजगन्नाथ–विश्वेश्वरपाण्डेयप्रभृतयो ग्रन्थकारा अभूवन् येषां कृतित्वं समतां नैव लभते। अस्यामेव शताब्द्यां विद्यावाचस्पतयो मधुसूदन-ओझाः, महामहोपाध्याया रामावतारशर्ममहोदयाः स्वस्य नवीनोन्मीलन-चिन्तन-संवलिताभिः मेघवर्षोपमाभिः कृतिभिः संस्कृतभाषाकाननम् असिञ्चन्। देशस्य स्वतन्त्रतासंघर्षकाले स्वतन्त्रताप्राप्त्यनन्तरञ्च कतिपये संस्कृतकाव्यप्रणेतारः प्रशस्तयशसः कवयोऽभवन्, तेषु केचन वर्तन्ते च। एष्वेव सन्ति 'पारिजात-हरणमहाकाव्यस्य प्रणेतारो यशस्विनः 'कविपति' इत्युपनामधेयाः उपापति-द्विवेदिनः।

उमापतिद्विवेदिनो जन्म सरयूपारीणब्राह्मणकुले १९५५ तमे वैक्रमाब्देऽभवत्। अयं स्वजन्मना उत्तरप्रदेशे देवरियाजनपदस्य पकड़ीग्रामभूमिमलङ्करोति। अनेन संस्कृतविद्यालये गुरुपरम्परया संस्कृताध्ययनं कृतम्। एतस्य हृदये यथा-स्वपूर्वजानामृषीणां संस्कारा वर्तन्ते तथैव छात्रजीवन एवायं राष्ट्रियभावनया अभिभूतोऽभवत्, अतएव असहयोगान्दोलने १९२१ तमे ईस्वीवर्षे परीक्षाया बहिष्कारं कृतवान्, पश्चात् संस्कृतस्याध्ययनाध्यापनयोरेव जीवनं यापयति।

भगवतः कृष्णस्य भक्तिभावनयाभिभूतोऽयं श्रीमद्भागवतमहापुराणमाधारी-कृत्य विरचितवान् एकविंशतिसर्गात्मकं परिजातहरणं महाकाव्यम् । अनेन काव्ये-नास्य कवेः यशोऽजरं जातम् । यद्यपि काव्यमिदं महाकाव्यलक्षणात्मिकां रूप-रेखां बिभर्ति तथापि नास्मिन् महाकाव्यस्य विराट् अन्तरात्माजागर्ति । वस्तु-तस्तु कृतिरियं भगवतः कृष्णस्य आभिमुख्यं विदधती पौराणिकतामुद्भासयति । काव्यमिदं पठतामस्माकं माघकृतेः शिशुपालवधस्य काव्यप्रबन्धः स्मृतिपथमा-याति । स्वल्पोऽस्ति अस्य काव्य-प्रबन्धः । भौमात् असुरात् देवानां मातुः अदितेः कुण्डलानयनमस्य प्रबन्धस्य विधेयमस्ति, तथापि प्रासङ्गिकी कथा सत्यभामायाः कृते परिजातवृक्षस्याहरणरूपा कवेः कल्पनाया विस्तारं विदधाति । द्वारका-वर्णन, रुक्मिण्या व्रतोद्यापनं, द्वारकास्थितकृष्णं प्रति नारदस्यागमनं, कृष्णाय पारिजातपुष्पार्पणं, पारिजाताय लालमां विदधत्याः सत्यभामाया मानम्—एता-वन्मितः काव्यस्य पूर्वार्धप्रबन्धः । उत्तरार्धे तु पारिजातहरणाय युद्धोद्योगः, नारायणेन्द्रयोर्युद्धम्, कश्यपस्यागमनम्, युद्धशान्तिः, पुनः कश्यपानुरोधेन इन्द्रस्य हितार्थं भगवतः कृष्णस्य भौमासुरवधोद्योगः, भौमासुरस्य वधः, अदितेः कुण्डलानयनञ्च, इन्द्राद् उपहारस्वरूपं पारिजातमुपलभ्य कृष्णस्य द्वारकां प्रति प्रस्थानम्, ततः सत्यभामागृहे पारिजातवृक्षस्यारोपणम्—एतावन्मितः प्रबन्धः वर्तते ।

स्वल्पेऽपि अस्मिन् कथाप्रबन्धे सूत्रं विस्तारयन् उमापतिद्विवेदो निपुणकवि-कर्मा लक्ष्यते । प्रबन्धे यत्र कविकल्पनाया अवकाशो वर्तते तत्र तस्य सूक्तयो निपुणं चमत्कारं विदधति विशेषतः प्रकृतवर्णने संवादप्रसङ्गे च । पश्यन्तु, अत्र काश्चन सूक्तीः । कविः प्रभातवर्णनं वितनोति । कमलानि विकसन्ति, अलयः तत्र गुञ्जन्ति, कविरुत्प्रेक्षते यत् भगवत्कमलमुखे श्रुतिवर्णाः साकारा भवन्ति—

**सलिलेषु सलीलमुल्लसन्नलिनेषूल्लसतोऽलिमण्डलात् ।**
**परतो ह्युपमेयतां गता भववास्ये श्रुतिवर्णमूर्तयः ॥**

( २।४८ )

समुद्रवर्णनेऽपि कापि नवीना चमत्कारिणी कल्पना कविना प्रस्तूयते—

**लाजानिव क्वापि पृषत्समाजान् जुह्वानमग्नौ वडवामुखोत्थे ।**
**चलज्जलध्वानमिषेण शान्त्यै स्वाहाकृतीः सन्ततमुल्लपन्तम् ॥**

( ३ । ७० )

समुद्रः तरङ्गध्वनिव्याजेन स्वाहा-स्वाहा वाचयति, जलपृषतो लाजाः सन्ति, तान् वडवा (अग्नि—) मुखे शान्त्यर्थं जुहोति ।

शरदृतुप्रसङ्गे ठेठग्राम्यच्छविं निबध्नन् उपमापतिद्विवेदः संस्कृतकाव्यपरम्परासु नितरामभावमेकं पूरितवान् । तत्र वर्णने अधुनातनो ग्रामो दृग्गोचरायमाणो भवति—क्वचिदाभीरघोषाः, क्वचित् फलभारभाजो गृहगुल्मिनीलताः क्वचित् क्षेत्राणि कर्षन्तो ब्रह्मसिद्धिसाधनभूतम् अन्नं वपन्तः कर्षका दृश्यन्ते । यथा—

**पश्योपपल्लिबहुवल्लिवितानरम्यां**
**नानाविधानसुमनः फलभारभाजः ।**
**ग्राम्यांगनाभिरतिरागमुदीक्ष्यमाणा**
**दूरे घना प्रतिगृहं गृहगुल्मिनीस्ताः ॥**
**क्षेत्राणि पश्य कृषतः कृषकान् विदूराद्**
**वप्तुं जवाद्यथ च संवपतश्च कांश्चित् ।**
**एते श्रमैरपि जडा जगतो विभूत्यै**
**ब्रह्माण्यमन्नमयकोषमुदञ्चयन्ति ॥**

( १० । १९–२० )

काव्यमिदं यथाकल्पनाप्रवणं तथैव भाषाप्रवणं चापि अस्ति । स्वकल्पनासु प्रायः पौराणिकीम् उद्भावनामाधारीकृत्य कविः प्रवृत्तो भवति । शिवस्य नन्दिनो वर्णने एतादृक्कल्पनाया विस्तारो दृश्यते, पश्यन्तु एकमुदाहरणम्—शिवो नन्दीश्वरात् अवतरति, अयं स एव नन्दीश्वरः यस्य रोमन्थफेनशकलानि अम्बरस्य तारकालिः, खुरखातं सिन्धुः, श्रमाम्बुना जलदाः पुष्टा जायन्ते, शृङ्गयुग्मं मलयमन्दराचलम्—

रोमन्थफेनशकलात्मकता कालि—

सञ्चित्रितास्बरतलात् खुरखातसिन्धोः ।

मेहप्रपूर्णलवणाम्बुनिधेः श्रमाम्बु—

पुष्टाम्बुदान् मलयमन्दरशृङ्गयुग्मान् ।।

( १८ । ५० )

नारदस्य विग्रहोद्भावि पिशुनचरितमपि एकेनैव छन्दसा सम्यक् कथितमस्ति । स नारदः कलहाभावात् विकलो वर्तते—

यदाप्रभृत्यद्भुतजन्यजन्यराजन्यकध्वंसविधिं व्यधास्त्वम् ।
कलेरभावाद् विकलस्तदादि लोकेश लोके सकले भ्रमामि ।।

अस्मिन्नेव नारदस्य यात्राप्रसङ्गे गङ्गायमुनयोः सङ्गमे सरस्वत्याः सङ्गममपि कल्पयन् कविरतिविस्तारं वितनोति । तत्र पदानां प्रयोगे भाषाया नादगुणः श्लाघनीयो वरीवर्ति । यथोदाहृते छन्दसि वर्णानां नादध्वनिषु नदीनां सकल-कलः सङ्गमो मुखरीभवति—

काप्युज्ज्वला लसितकान्तिमिलत्प्रवाल—

च्छाया क्वचित् पुनरवाललमालनीया ।

खेलन्मरालकुललोलवरालमाल—

शैवालजालबहलैर्जटिलान्तराला ।

( ५ । ६२ )

एवं कल्पनाप्रवणो भाषाचमत्कारपूरितः पौराणिकोऽयं काव्यप्रबन्धः अस्माकं मनो हरति । अनेन संस्कृतवाग् उल्लासं विदधाति । वयं वक्तुं शक्नुमो यत् प्रबन्धमिमं विरचयन् उमापतिद्विवेदः संस्कृतकविपरम्परासु स्वस्थानं न्यदधात् ।

●

श्रीरामेश्वरप्रसाद त्रिपाठी

# संस्कृतभाषाया भाषान्तरे प्रभावः



अथ हजूर, अजी हजूर, अजी साहब, सरकार, मालिक इत्येते कतिपया भाषाः शब्दाः संस्कृतदृशा विचार्यन्ते। तत्राद्या हजूर इति शब्दः सजूरित्यस्य प्रथमैकवचनान्तस्य सजुष् शब्दस्यापभ्रंशः प्रतीयते। सह जुषते इति विग्रहे सहोपपदात् जुष् धातोः क्विपि समासे चायं शब्दो निष्पद्यते। भगवता पाणिनिना ससजुषोरुरिति सूत्रे रुत्वं विधातु सजुष् शब्दः उद्देश्यतया पठितः। अर्थश्चास्य द्वौ भवितुमर्हतः एकः सह प्रीतिशीलः द्वितीयस्तु साहित्येन सेवाविधाता सहकर्मा इति। यतो जुष् धातुः प्रीतिसेवनयोरर्थयोः प्रसिद्धः। इमौ द्वावपि अर्थौ अद्यतनेऽपि काले लोके तत्र प्रसिद्धौ एव य उच्यते हजूर इति। कालक्रमेण सकारस्य हकारे उच्चारिते अन्ते च विसर्गाभावे कृते 'हजूर' इत्युच्यते। पाश्चात्त्यभाषायां बहुशः इयं शैली यद् सकारस्य हकार इत्युच्चार्यते—यथा सप्ताह इत्यस्य हप्ता इति। सिन्धु इत्यस्य हिन्दु इति। न्यूनता त्वद्यत्वे इयमेव—यत्सेवकेन वा जनेन स्वामिनमधिकारिणं वा प्रत्येवोच्यते हजूर इति न तु स्वामी अधिकारी वा प्रवक्ति अधिकृतं प्रति हजूर इति। उचितं तु प्रतिभाति यत्स्वामिनाऽपि अवश्यमिदं वचनीयं स्यात् अधिकृतस्याऽपि सहप्रीतिभाक्त्वात् सहकर्मत्वाद्वा। अयं च शब्दः एतत्कृतश्च व्यवहारः साम्यवादस्य पूर्णतया पोषकः। किन्त्वस्मिन् साम्यवादे सेव्यसेवकभावः अधिकृताधिकारिभावश्च जागरूक एवास्ति—इत्यपि न विस्मर्तव्यम्। अयि सजूः! इत्यत्र अयि इत्यस्य अजि–अजी–इति वा उच्चारिते अजी हजूर इति जातम्। यकारस्य भाषायां जकारोच्चारणं बहुत्र भवत्येव।

अयं संस्कृतः शब्दोऽर्थानुसन्धानपुरस्सरं यदि सर्वेण सर्वं प्रति प्रयुज्येत तदा भारतवर्षे पुनः प्रेमरज्ज्वा सर्वे बद्धा भविष्यन्ति। पारस्परिकः कलहश्च

झटित्येव विलीयेत । तृतीयः अजी साहब इति तु अपि साधवः इत्यस्य विकृति-भूतः । अत्र पूर्ववत् अपि इत्यस्य अजी इति बोध्यम् । साधव इत्यस्य साधुशब्द-प्रकृतिः जस्, तस्यावयवो धकारो हकारतामापन्न इति साहब इति जातम् ।

अयमपि शब्दः पूर्ववदेव सम्मानसूचकः । अनेनाऽपि शब्देन व्यवहरन् लोकः कलहादिदोषशून्यो भविष्यतीति मन्ये । चतुर्थः—सरकार इति तु सर्वकार इत्यस्य विकारभूतः । तत्र वकारलोपः सर इत्यवशिष्यते । सर्वं करोति इति व्युत्पत्त्या सर्वकारशब्दस्यार्थः स्पष्टं प्रतिभात्येव । सर्वं कर्तुं समर्थः सर्वकारः । अथवा गत्यर्थकात् सृ धातोः संज्ञायाम् भावे घ प्रत्यये सर इति सरकारः संस्कृत एव । सरशब्दार्थो गतिः । सरकारः प्रजावर्गस्य गतिं करोत्येव तदधीन एव प्रजावर्गः ।

पञ्चमस्तु मालिकशब्दः शुद्ध एव संस्कृतशब्दो भाषायामागतः प्रतीयते । अत इनि ठनौ इत्यनन्तरं व्रीह्यादिगणे च मालाशब्दस्याऽस्ति पाठः । ततश्च मत्वर्थीये इनि प्रत्यये सति माली इति । स्वार्थे च पुनः कप्रत्यये कृते मालिक इति रूपम् । यश्च भवति मालिकस्तत्सविधे जनानां धनानां मालासमुदायो भवति । अथवा धारणार्थकात् मल्धातोर्भावे घञि मालशब्दो निष्पन्नः । अर्थश्चास्य भवति धारकपदार्थो द्रव्यादिरूपः, सोऽस्यास्तीति मालिकः अत इनिठनाविति मत्वर्थीयष्ठन् प्रत्ययः तस्येकादेशश्च अद्यत्वे खलु सर्वोऽपि जनो मालिको भवितुमिच्छति—परन्तु तद्योग्यं पुण्यं नाचरति, कथं तर्हि मालिको भवेत् ? भगवत्कृपया सद्बुद्धिं प्राप्य पुण्यं कर्म आचरेत्—तदाऽवश्यं मालिको भवेदिति शम् ।

●

# ग्रन्थ-समीक्षा

• श्रीशिवशङ्कर त्रिपाठी

श्रीनेहरूचरितम् ( महाकाव्यम् )—लेखकः श्रीब्रह्मानन्दशुक्लः, प्रकाशकः श्रीब्रह्मानन्दशुक्लः, वितरकं शारदा-सदनं, ३८ राधाकृष्ण, खुरजा (उ० प्र०) । मूल्यम्—१०·०० रु०

'श्रीनेहरूचरित' मिदमष्टादशसर्गात्मक महाकाव्यम् । श्रीब्रह्मानन्दशुक्ल-महाभागाः अस्य प्रणेतारः । कविवराणां शुक्लमहोदयानां रचनाक्रमे सप्तमं स्थानमस्य । पूर्वरचनासु 'श्रीगान्धिचरितम्', 'उद्बोधनम्', 'मणिनिग्रहः' 'भारतसुषमा', 'आश्वासनम्', 'वस्त्रावतारः' इति विद्वद्भिः चर्चिताः प्रशसिताश्च । प्रसादगुणपूर्णा शैली आलोच्यास्य महाकाव्यस्य वैशिष्ट्यम् ।

महाकाव्यस्य प्रथमसर्गे काव्यविषयस्य सङ्केतः, द्वितीये कश्मीरसौन्दर्यम्, श्रीमोतीलालस्य परिचयः, तृतीये पितुः पुत्राभावव्यथा, पुत्रलाभाय वरप्राप्तिः, चतुर्थे जवाहरलालस्य जन्म-वर्णनम्, पञ्चमे तस्य संस्काराः, षष्ठे तस्य शिक्षा, सप्तमे तस्यामेरिकाम्प्रति यात्रा, अष्टमे देशदशा-श्रवणं, बाँकीपुरस्य यात्रावर्णनं नवमे नेहरोः आत्मचिन्तनम्, दशमे तस्य विवाहवार्ता एकादशे विवाह-मङ्गलाचारः, कमला-विवाहस्वीकृतिः, द्वादशे श्री जवाहरलालस्य विवाहो, देश-दुर्दशा, कमलाया रुग्णता एवं गान्धि-सान्निध्यम्, कारागारप्रस्थानं च त्रयोदशे कान्तायाः मातापित्रोश्च स्वर्गवासः स्वातन्त्र्यप्रस्तावाङ्गीकरणम्, चतुर्दशे 'भारतं त्यजत द्रुतम्' इति घोषणा, इन्दिरायाः शिक्षणम् एवं स्वतंत्रतायाः प्राप्तिः, पञ्चदशे देशविभाजनम्, नरसंहारः, शरणार्थिनां समस्या तथा गान्धिमहाभागानां देहावसानम्, षोडशे भारतोत्कर्षहेतवे कृतानां नेहरोः सर्वकार्याणां वर्णनम्,

सप्तदशे देशस्य नवनिर्माणयोजनानाम् आकलनम्, अन्तिमे अष्टादशे नेहरो-र्महाप्रयाणम् इत्येतावती संक्षिप्ता रूपरेखा महाकाव्यस्य ।

सरला भाषा, सरसशैल्यां निबद्धमिदं काव्यं सर्वथा पठनीयम् । काव्य-नायकश्रीजवाहरलालस्य उदात्तचरिताङ्कनं पश्यन्तु भवन्तः—

**आयान्ति, यान्ति जगतीह सदैव जीवाः स्वोयोदरञ्च सुचिरं परिपूरयन्ति ।**
**जीवन्ति ये परहिताय वरेण्यभावास्तानेव कानपि मुदा मनसा स्मरामः ।।**

भाषानुवादेन सह प्रकाशितं काव्यं सर्वेषां कृते सुगमम् ।



## मुखरताऽवसरे हि विराजते

श्रीप्रभातमिश्रः

**द्विरदसन्निभभीषणविग्रहः**
**वियति नीलनवीनपयोधरः ।**
**भ्रमति गर्जति वर्षति साम्प्रतम्**
**मुखरताऽवसरे हि विराजते ।।**



**जलदवर्षणहर्षितमानसाः,**
**सरससार्षपकान्तिमनोहराः**
**चटुलयन्ति नदन्ति च दर्दुराः**
**मुखरताऽवसरे हि विराजते ।।**

**पतिसमागमसज्जितवासका**
**ललितवेशधृता नवनायिका ।**
**कृतविलम्बपतिं बहु भाषते**
**मुखरताऽवसरे हि विराजते ।।**



# आगतपत्राणि

( १ )

स्वामी ब्रह्माश्रमः

मीरजापुरम्
गुरुपूर्णिमा २०२७

प्रियसुहृदः सम्पादकमहोदया,

लब्धौ भवतां संगमनीपत्रिकायाश्चतुर्थवर्षस्य संयुक्ताङ्कौ प्रथमद्वितीयाङ्कौ। भवन्तः स्वीयपत्रिकामाध्यमेन संस्कृतजगतो महतीं सेवां विदधति। तदर्थं मे साधुवादाः स्वीक्रियन्ताम्। वर्तमानसमये देववाणीसेवायाः पक्षद्वयं वर्तते। कार्येषु प्रगतिः प्रथमः पक्षः, अकार्येषु नियन्त्रणं द्वितीयः पक्षः।

अकार्येषु नियन्त्रणमित्यस्योदाहरणमत्र 'अनुसन्धानसंस्थानस्य विषये' लेखो वर्तते। यद्यपि 'संगमनी'–संयुक्ताङ्के 'गङ्गानाथझा–शोध संस्थान' विषयक महामहोपाध्यायपण्डितलक्ष्मीनारायणद्विवेदिनो लेखं पठित्वा संस्थानकार्येभ्यो नैराश्यं प्राप्तम् तथापि भवद्भिः स्वपत्रिकाद्वारेण तथ्यं प्राकाश्यमानीतमिति ज्ञात्वा सन्तोषोऽप्यधिगतः। साहस एषः, न हि कश्चित् विडालस्य गले घण्टिकां बध्नाति। महामहिमराष्ट्रपतेर्वाराहव्यङ्कटगिरेः समक्षं यस्य अनुसंधानसंस्थानस्य शिलान्यासो जातः, येन च महामहिमोपराज्यपालः डा० आदित्यनाथ झाः तथा अन्येऽपि विद्वांसः सम्बद्धाः सन्ति तस्य संस्थानस्य स्खलितिपूर्णं कार्यं पत्रिकाद्वारेण विद्वत्समक्षमानीय भवद्भिः साहसस्य परिचयो दत्तः। शिलालेखः पठितो मया। एतादृशः संस्थानस्य शिलालेखः केन लिखितः, कैश्च स्वीकृतः, महदाश्चर्यम्, न तत्रच्छन्दसो लालित्यं, न कथ्यस्य रमणीयत्वम्, न चापि कापि प्रौढिः, अपि व्याकरणनियमान् उपेक्ष्य अशुद्धः स शिलालेखः। इदं प्रयागनगर्या विदुषां कृते लज्जाकरं कार्यं जातम्।

पण्डितलक्ष्मीनारायणद्विवेदिन एवंविधपत्रप्रकाशनाय मया भवद्भ्यः साधुवादो दीयते। एतादृशसंस्कृतपत्रप्रकाशनेन महानुपकारो भविष्यति संस्कृतभाषा-साहित्यसंवर्धनस्य।

( २ )

रमानाथशास्त्री जोधपुरम्

श्रावणकृष्णः ७, संवत् २०२७

मान्याः संगमनी–संपादकमहोदयाः,

सादरं प्रणतिततिः,

भवत्पत्रिकायाः चतुर्थवर्षस्य संयुक्ताङ्करूपेण प्रकाशितौ प्रथमद्वितीयाऽङ्कौ अधिगतौ । तत्र प्रकाशिताः सर्वेऽपि लेखाः सम्यक्तया पठिताः तेषु 'अनुसन्धान-संस्थानविषये' इति शीर्षकमण्डितं श्रीलक्ष्मीनारायणद्विवेदमहोदयानां वैदुष्य-वलितं स्तोत्रपात्रं पत्रमपि पठितम् ।

तीर्थराजप्रयागः प्रकाण्डतमपाण्डित्यमण्डितानां पण्डितानां नगरी । तस्या-मेतादृग्दोषपूर्णशिलालेखलेखकाः विद्वांसः सन्तीति सञ्चिन्त्य नितरां चेखिद्यते चेतः ।

स्वर्गीयगङ्गानाथ झा महाभागाः अन्ताराष्ट्रियख्यातिप्राप्ता विद्वांसः आसन् । तेषां स्मृतौ स्थापिते अनुसन्धानसंस्थाने पदे पदे दूषितस्य शिलालेखस्य संस्थिति-र्नितरामरुन्तुदा ।



वक्राः कवीनां गिरः

निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः
स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः ।
तद् वैदग्ध्यवतां सतामपि मनः किं नेहते वक्रतां
धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ?

—प्रसन्नराघवनाटकात्



## संस्कृते चलचित्रस्यायोजनम्

भारतीयसंविधाने स्वीकृतासु चतुर्दशभाषासु संस्कृतभाषाप्यन्यतमाऽस्ति। संस्कृतभाषा भारतवर्षस्य न कस्यचित्प्रदेशस्य नापि कस्यचिज्जातिविशेषस्य भाषा वर्तते; अपि तु सा निखिलभारतस्य भाषाऽस्ति। तथा च सा अस्माक देशस्य संस्कृतीतिहासयोर्भाषा विद्यते। संस्कृतमन्तरा न वयं स्वदेशस्येतिहासस्य कल्पनां कर्तुं शक्नुमः। प्रदेशविशेषस्य भाषा नेयमस्तीति सत्यं, किन्तु संस्कृत-वक्तारो देशे बाहुल्येन प्राप्यन्ते। संस्कृताध्यायिनां संख्यापि कस्याश्चिद्भाषाया अध्येतृभ्यो न्यूना नैव। भारतीयभाषासु संस्कृतभाषैवेदृशी नाम यस्या अध्ययनं विदेशेषु गाढाभिरुच्या क्रियते।

संस्कृतनाटकानि स्वदेश इव विदेशेष्वप्यभिनीयन्ते। अत्रैको महानभावो-ऽस्मान् दुःखाकरोति यद्यदा भारतीयासु सर्वासु भाषासु प्रायश्चलचित्रं प्रस्तुतं तदा चलचित्रनिदेशकैः संस्कृते चलचित्रं कथञ्चाद्याप्युपक्रान्तम्। अभावोऽयं निदेशकैः दूरीकर्तव्यः। आर्थिकदृष्ट्या कदाचित् लाभो न भवेत् किन्तु राष्ट्रियगौरवदृष्ट्या इदमावश्यकमेव। तत्रेदानीं नूतनकथानां चलचित्रणमास्ताम्; पूर्वं संस्कृतस्य प्रसिद्धानि नाटकानि—अभिज्ञानशाकुन्तलम्, मृच्छकटिकम्, मुद्राराक्षसम्,—इत्या-दीनि चलचित्ररूपेणाभिनेयानि। अस्माकमनुरोधोऽयं यद् भारतशासनमप्यस्मिन् कार्ये साहाय्यं प्रयच्छतु।

## संगमन्या गीतविशेषाङ्कः

अग्रिमाब्दे वयं संगमनीपत्रिकाया गीतविशेषाङ्कं प्रकाशयिष्यामः। तस्य सामग्रीमधुनातः एव संकलयामः। विदुषः शोधस्नातकांश्च अनुरुन्ध्मो यत्ते संस्कृतगीतकाव्यसम्बन्धिनीं सूचनामस्माकं मविषे प्रेषयन्तु तथाऽप्रकाशितगीत-काव्यानां परिचयमथ च तेषामाद्यन्तयोः किञ्चिदंशं विलिख्य सम्प्रेषणेनानु-गृह्णन्तु। वयमिच्छामो यद् गीतविशेषाङ्के संस्कृतसाहित्यान्तर्गतगीतसाहित्यस्य समग्रा सूचना संकलिता भवतु। तथा सत्यङ्कोऽयं विदुषां शोधच्छात्राणां च कृते उपयोगी भविष्यति। विश्वसिमो यद् विद्वद्वर्गोऽस्मिन् कार्ये सहयोगं प्रदास्यति।

●

# संगमनी

# Sangamani

संस्कृतत्रैमासिकी

चतुर्थवर्षे प्रकाशितरचनानां सूची

( संवत् २०२५, शकाब्दः १८९० )



सम्पादकः

**प्रभातशास्त्री**

सहसम्पादकौ

**तारिणीशझाः**

**डा० जयशङ्कर त्रिपाठी**

अमात्यवत्सराजस्य

# हास्यचूडामणिप्रहसनम्

( भूमिकासहितसम्पादितसंस्करणम् )

Amatya Vatsraja's

# HASYA CHUDAMANI PRAHASANAM

( Edited with Preaface )



सम्पादक :

डॉक्टर जयशंकर त्रिपाठी

साहित्याचार्यः, एम्०ए०,डी०फिल्०

Edited By

Dr. JAYA SHANKAR TRIPATHY

Sahityacharya, M.A.,D.Phil.

# भूमिका

●

## अमात्यो वत्सराजः, तस्य हास्यचूडामणिः प्रहसनञ्च

इदं प्रस्तूयते पाठकानां पुरो वत्सराजकृतेर्हास्यचूडामणेर्नाम प्रहसनस्य सम्पादितं संस्करणम्। अत्रावधारणीयं युज्यते यत् संस्कृतनाट्यसाहित्यं विक्रमशताब्द्याः प्राग्भासस्य कृतिभिराविर्भवति, त्रयोदशशताब्द्यां वत्सराजस्य कृतिषु तत्साहित्यं विरामञ्च दधौ। मध्ये वर्तते कालिदास-शूद्रक-विशाखदत्त-बाणभट्ट-नारायणभट्ट-भवभूत्यादिनाट्यकाराणां महती भासमाना परम्परा। रसनिष्पत्तिपर्यवसायि संस्कृतनाट्यप्रणयनं भवति, एतत्स्पष्टतमं लक्ष्यते एषां नाट्यकाराणां रचनासु। संस्कृते दश रूपकाणि, अष्टादश उपरूपकाणि च विवेच्यन्ते। किन्तु प्रायः कवयो रूपकभेदेषु नाटकप्रकरणयो रचनायामेव दत्तावधाना बभूवुः। अयं वत्सराजस्तु रूपकस्य षट्सु भेदेषु नाट्यप्रणयनं चकार। त्रयोदशशताब्द्यामपि रूपकाणामेते भेदाः तत्र वत्सराजस्य जन्मभूमौ दशार्णप्रदेशे अभिनयप्रकारेऽस्तित्वं दधति स्म, इति तथ्यं भारतीयनाट्यकलाया उद्गमं प्रति आस्माकीनां दृष्टिमुन्मीलयति।

१९१८ तमे ईस्वीवर्षे सेण्ट्रल लाइब्रेरी-बड़ौदा-संस्थया गायकवाड़—ओरियण्टल—सीरीजान्तर्गते 'कविवत्सराजप्रणीतरूपकषट्कस्य' मुद्रणं कारयित्वा प्रथमं प्रकाशनं कृतम् आसीत्। ततो वत्सराजस्य कृतित्वं दृष्टिपथमायाति। वयमित्थं मन्तुं पारयामो यद् भरतकृतनाट्यशास्त्रस्य व्याख्याता अभिनवगुप्ताचार्यः स्वजन्मना कश्मीरदेशमलञ्चकार, किन्तु तस्य नाट्यशास्त्रस्य रचना-

प्रयोगप्रवीणाः कवयस्तु इमं मध्यदेशं दशार्णामारभ्य विदर्भप्रसृतं भूभागं स्वाविर्भावैनालञ्चक्रुः, तेषु भास-कालिदास-शूद्रक-बाणभट्ट-भवभूतिप्रभृतिषु नामसु वत्सराजोऽपि सादरं गण्यते। अस्य कृतीनां विवेचनेन भारतीयनाट्यकलाया मूलप्रश्नाः समुद्यन्ति। अतोऽस्य नाट्यकारस्य महत्त्वं निर्विवादं नाट्यसाहित्येतिहासे वर्तते। अत्र नाट्यकारस्य अमात्यवत्सराजस्य परिचयपुरस्सरं हास्यचूडामणिप्रहसनविषये किमपि विस्तारं वितन्मः।

## भारतीयनाट्यपरम्परा अमात्यो वत्सराजश्च

वत्सराजः स्वकृतिषु स्वं परमर्द्दिदेवस्य अमात्यम् उल्लिखति।[१] षट्सु रूपकेषु 'किरातार्जुनीयव्यायोगः' तु त्रैलोक्यवर्मदेवस्य परिषदि अभिनीतो बभूव। शेषाणि पञ्च रूपकाणि परमर्द्दिदेवस्य परिषदि अभिनीतानि संजातानि—इत्येवं निर्दिशति नाट्यकारो वत्सराजः। त्रैलोक्यवर्मदेवः परमर्दिदेवस्य पुत्र उत्तराधिकारी चासीत्। परमर्दिदेवस्य परिषदि पञ्चरूपकाणामभिनयोल्लेखेन ज्ञायते यदधिकं कालं वत्सराजः परमर्दिदेवस्य सभायामेव यापयामास। अयं परमर्द्दिदेवनामा राजा (११६५-१२०२ ई०) भारतीयेतिहासे राजपूतकालस्यान्तिमे समये कालञ्जर-भूखण्डस्य प्रशासको बभूव। चन्देलवंशीयोऽयम्। चन्देलवंशेऽस्मात् प्राक् (अस्य पिता वा) मदनवर्मनामा राजा (११२८-११६४ ई०) बभूव, यस्य गुर्जराधीशेन सिद्धराजजयसिंहेन सह विग्रहसन्धिकथा 'कुमारपालप्रतिबोधे' वर्णिता जाता। प्रबन्धचिन्तामणावपि परमर्दिदेवस्योदन्तो वर्तते। अनयोः शासनकालश्चन्देलवंशस्य पुनरुत्थानसमयोऽस्ति। अस्मिन्नेव वंशे कलारसिका

---

१. कर्पूरचरितभाणे—

**कालञ्जरपतेर्महाराज श्रीपरमर्द्दिदेवस्यामात्येन कविना वत्सराजेन विरचितं कर्पूरचरिताभिधानं भाणमभिनेतुमाविष्टोऽस्मि।**

हास्यचूडामणिप्रहसने—

**राआ परमड्डिएवो अस्सणो अमच्चेण कविणा वच्छराएण विरइअं हासचूडामणिं णाम पहसणं अहिणेदुमादिसदि भवंतं।**

राजानः 'खजुराहो' इति नाम्ना प्रसिद्धानां मन्दिराणां, तेषु उत्कीर्णकला-खचितप्रतिमासहस्राणां निर्मातारो बभूवुः। मन्दिराणां निर्माणकालः ईस्वी-दशमशताब्द्या आरभ्य द्वादशशताब्दीपर्यन्तं यावद् वर्तते। ईस्वी ९१० तम-मारभ्य १०३५ तमवर्षाणि यावद् हर्ष-यशोवर्मन-धंगदेव-गंडदेव-विद्याधरराज्ञां समयः चन्देलानामभ्युत्थानकालः कथ्यते।

एते राजानो यथैव कलारसिकाः तथैव च युद्धप्रिया वीराश्च आसन्। कविर्वत्सराजोऽपि परमर्दिदेववर्मणो राजसभायां न केवलं महामात्यपदमलङ्कर्तु-मेव क्षमः, किन्तु युद्धसमये कृपाणधारी भूत्वा अग्रेसरश्चासीत्। चन्देलराज्यं पृथ्वीराजचौहानेन सह विग्रहे जाते सति दुर्बलत्वं प्राप। कन्नौजराज्यस्याधिपतयो गाहड्वालवंशीयाः चन्देलराज्यस्य सपक्षा आसन्। यदा मुहम्मदगोरस्याक्रमणे दिल्लीपतिचौहानपृथ्वीराजस्य पतनमभूत् तदनन्तरम् अन्यानि राजपूतराज्या-न्यपि विनाशं लेभिरे। तदैव चन्देलराज्यस्य लक्ष्मीरपि विक्लिष्टा जाता। कालञ्जराधिपतेः परमर्द्दिदेवस्य राजधानी महोबानगरी अवर्तिष्ट। कुमारपाल-प्रतिबोधे मदनवर्मणः सुखसम्भारस्य यद्वर्णनं, राज्यबलस्य च यावदुत्कर्षो दृश्यते, परमर्दिदेवराज्येऽपि तत्सर्वं वैभवं वत्सराजस्य सूक्तिभिः सूचितं भवति। अन्यैः प्रसङ्गैश्च राज्यस्य प्रजानाञ्च सुखं विलासः शान्तिश्च संसूच्यन्ते। कविना परमर्द्दिदेवस्य पराक्रमं समृद्धिं चाभिलक्ष्य यदुक्तमधःसूक्त्योः तत्तदेव राज्यस्य विलसितं प्रकटयति—

युष्माभिर्योगपद्येन सर्वकामार्थसिद्धये।
परमर्द्दिनरेन्द्रो वा समुद्रो वा निषेव्यताम्॥

(समुद्रमथन० १।४)

अनारता दानपरम्पराभि-
र्निर्वेदमायाति कदाचिदुर्वी।
बिभर्ति तत्पूर्वमिव प्रहर्षं
मुहुःप्रदानैः परमर्दिराजः॥

(त्रिपुरदाहः १।४)

खजुराहो-मन्दिराणामैश्वर्यमपि एतदेव विलसितं प्रमाणीकरोति। तदेतेषु रूपकेषु विलासपराक्रम-प्रवाहयोः सङ्गमः देशस्यातीतवैभवेऽस्मान् निमज्जयति।

परमर्द्दिदेवस्य राज्यकालः त्रयोदशविक्रमशताब्द्याः पूर्वार्धेऽवर्तत। चन्देलैः शासितः प्रदेशः तदानीं जुझौतीराज्यसंज्ञयाऽभिहितो भवतिस्म। चन्देलानां वीरतायाः स्वाभिमानस्य च स्वकीयं वैशिष्ट्यमासीत्। १२५९ तमे वैक्रमाब्दे (१२०२ तमे ईस्वीवर्षे) दिल्लीसुल्तानेन कुतुबुद्दीनेन जुझौतीराज्यमाक्रान्तम्, कालञ्जरदुर्गो विजितश्च, किन्तु परावर्तिते तस्मिन् चन्देलाः पुनः कालञ्जरदुर्गं तुर्केभ्यः स्वहस्ते कृतवन्तः।[१] परमर्द्दिदेवत्रैलोक्यवर्मदेवयो राज्यकालेन साकम् अमात्यपदमलङ्कर्तुः वत्सराजस्यापि स्थितिरासीत्, अतएव कवेरस्य जीवनकालः त्रयोदशविक्रम शताब्द्या मध्यभागो निश्चीयते।

वत्सराजस्योपलब्धानि रूपकाणि इमानि सन्ति—

१. कर्पूरचरितभाणः २. रुक्मिणीहरणईहामृगः ३. त्रिपुरदाहो डिमः ४. हास्यचूडामणिः प्रहसनम् ५. समुद्रमथनाभिधानः समवकारः ६. किरातार्जुनीयव्यायोगः।

रूपकस्य प्रसिद्धतरौ भेदौ नाटकप्रकरणौ विहाय अप्रसिद्धान् खलु इमान् भेदान् अभिलक्ष्य वत्सराजो नाट्यकृतिरवे प्रवृत्तो जातः, अत्र कारणेन केनापि भवितव्यम्। इदमत्रावधातव्यम्। स्वकीये नाट्यशास्त्रे भरतमुनिः मनुते—

धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम्।
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च।
नानाभावोपसम्पन्नं नानावस्थान्तरान्तकम्।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्।
उत्तमाधममध्यानां नराणां कर्मसंश्रयम्॥

(नाट्यशास्त्रम् १।१०९–११३)

१. भारतीय इतिहास का उन्मीलन, पृ० ३६०

अतो लोकवृत्तानुकरणमेव सर्वं नाट्यप्रपञ्चम्। ततो रूपकस्य नाटकभेदः, यत्र कश्चिद्देवो राजा वा उदात्तचरितशाली नायको भवति, प्रकरणभेदश्च च, यत्र नाटकानुरूपमेव कल्पितनायकं कविरवतारयति, द्वावपि भेदौ विहाय, अन्यानि रूपकाणि, तथा च तद्वदेव नाटिका–प्रकरणिकाख्योपरूपके द्वे च विहाय, अन्यानि उपरूपकाणि च लोकवृत्तं नराणां विविधं कर्मसंश्रयमेव चाश्रित्य नाट्य-विधौ स्वास्तित्वं द्योतयन्ति। संस्कृतस्य प्रथमनाट्यकारो भासः लोकवृत्तमेवा-भिलक्ष्य रूपकरचनासु प्रवृत्त आसीत्। तस्य 'पञ्चरात्र-प्रतिमा'-रूपके महाभारत-रामायणीयां कथामनुसरती अपि लोके प्रथितमेव कथावस्तु अनुहरतः। अनु-मीयते च प्रतिज्ञायौगन्धरायणस्वप्नवासवदत्तयोः कथावस्तुनी अपि कविर्भासः लोकेभ्य एव श्रुतवान् आसीत्, यथाश्रुतम् तथैव निबद्धवान्। अथवा इमे वस्तुनी आश्रित्य तदानीन्तने समयेऽस्मिन् मध्यदेशे लोकनाट्यमपि अभिनीतं भवतिस्म। तदेव लोकनाट्यं परिष्कृत्य भासः स्वनाट्यकृतीर्विरचयामास। उदयन-वास-वदत्तयोः कथा कालिदाससमयेऽपि लोके बहुप्रथितासीत्—

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्। ( मेघ० पू० ३२ )

कालिदासस्यापि विक्रमोर्वशीयं त्रोटकं मालविकाग्निमित्रं नाटकं च द्वे अपि रूपके लोकोदन्तात् कथावस्तुनी गृहीत्वा कविकल्पनायां नाट्यत्वं लेभाते। शूद्रकस्य मृच्छकटिक-प्रकरणस्यापि च कथावस्तुनि लोकोदन्तस्य दायभागोऽधिको वर्तते।

एवं भारतीयनाट्यपरम्पराया आविर्भावकाले लोकवृत्तानुकरणं सर्वत्र नाट्य-स्यान्तर्बाह्यं ववृणे। पुनश्च यदा विकसिता नाट्यपरम्परा राजचरितमाश्रितवी तदापि उपरूपकेषु, अप्रसिद्धेषु रूपकभेदेषु च तस्य लोकवृत्तस्यास्तित्वम् अवतिष्ट। न केवलं लोकवृत्तस्यास्तित्वं लोकनाट्यस्य सहजत्वमपि तेषु द्रष्टुं शक्नुमो वयम्। कवेर्वत्सराजस्य रूपकाणि पठित्वा इदमेव निष्कलितं निश्चीयते। अस्य षट्सु रूपकेषु काव्यगुणापेक्षया अभिनयस्य प्रकृतिरेव जागर्ति। नाट्यस्य भारतीवृत्तिरत्रैव मध्यदेशे प्रयुज्यते स्म, इति नाट्यशास्त्रस्य अनुशीलनेन ज्ञायते। नाट्यकला यदा कविभिरनुगृहीताऽभवत् तदा तस्या रचनासु भारतीवृत्तिः बहु

अस्तित्वं जगाम, यतो नाट्ये कवित्वं प्रवेशं लेभे, भारती वृत्तिः संवादप्रधाना अस्ति, संवादे च कवित्वस्य अवकाशो वर्तते । अभिनयप्रयोक्तुरधिकं कवेराश्रिता च नाट्यकलाऽभवत् । अतएव भारतीवृत्तेर्जन्मभूमि दशार्णमारभ्य विदर्भपर्यन्तो मध्यदेशः भारतीवृत्तिमाश्रित्य भारतीयनाट्यपरम्परायां अशरतमजस्रमंतिह्यं कृतित्वं च ददौ । तस्याः परम्परायाः सैव सहजा प्रकृतिः, उत्कर्षश्च उभावपि वत्सराजस्य रूपकेषु विद्योतेते ।

चन्देलवंशीया राजान शिवभक्ता आसन् । खजुराहो–मन्दिरेषु प्राधान्येन शिवस्यैव प्रतिष्ठा तै राजभिरकारि । कवेर्वत्सराजस्यापि शिवभक्तिरेतेषु रूपकेषु दृश्यते । अत्र इतिहास–प्रज्ञा किमपि सत्यं स्मरति । ताण्डवप्रियः शिवो नाट्यस्य देवता अस्ति, 'मालविकाग्निमित्रे' नाट्यस्य विषये कालिदासस्योक्तिर्वर्तते—

रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।

(माल० १।४)

यदि नाट्यं लोकवृत्तानुकरणमस्ति तदा भारतीयलोकजीवनस्य प्रियो देवता शिवो द्विधा विभक्तं नाट्यं स्वाङ्गे धारयति, इति विश्वासः स्थाने खलु सत्यम् । वत्सराजेन षट्सु रूपकेषु नान्द्यां शिवस्यैव प्रसङ्गो भक्तिभावपुरस्सरं निबद्धो वर्तते । केवलं रुक्मिणीहरण-ईहामृगे, समुद्रमथनाभिधानसमवकारे च शिवस्यानन्तरं द्वितीये छन्दसि विष्णुविषया नान्द्यपि कृता अस्ति, मन्यते तत्र नाट्यस्य कथाप्रसङ्गं समभिलक्ष्य विष्णोः स्मरणं जातम् । कविना नान्द्यां शिवाम्बिकयो रतिभावं, भालवह्निं, त्रिपुरस्य भस्मप्रसङ्गं, शिरसि गङ्गां शशिनं, हेरम्बस्य कौतुकञ्चाश्रित्य मनोहारिणी सूक्तिकल्पना प्रस्तूयते । एवं भरतवाक्येष्वपि शिवभक्तिः प्रदर्शिता भवति ।

कवेराश्रयदाता नृपतिः श्रीपरमर्द्दिदेवो विद्वान्, विद्यानुरागी, विदुषां धनादिना सम्मानकर्त्ता चास्ति । कविरत्र अतिशयोक्तिं निबध्नाति यद्, भगवती वागधिदेवता राजानमेनं पुम्भावमभ्यागता—

गेहेषु प्रसभं सदैव विदुषां सापत्न्यवैरग्रहा-
द्दासीकर्तुमनारतं वितरणक्रीडाभिरब्धेः सुताम् ।
एष श्रीपरमर्द्दिदेवनृपतिर्निस्सीमविद्यानिधि-
र्नूनं वागधिदेवता भगवती पुम्भावमभ्यागता ।

(हास्यचूडामणिः १।४)

कविः पञ्चरूपकाणां भरतवाक्येषु मेघेभ्यश्शिष्टां वृष्टिं प्रार्थयति, येन कृषकाणां प्रति तस्य सौहार्द्रं स्फुटीभवति, अपि च कालिदासस्य मेघदूतस्थं कथनमपि 'त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञै' रिति स्मृतिपथमायाति । मेघेभ्यो वृष्टिप्रार्थनासमये वत्सराजस्य वाण्यां 'यज्ञाद् भवति पर्जन्यः पर्जन्यादन्नसम्भव' एतद् गीतोक्तं दर्शनमपि सहजामभिव्यक्तिं लभते—

वर्षन्तु वारि रुचि (ताभ्यधिकं पयोदाः)
वर्षन्तु सूक्तममृताभ्यधिकं कवीन्द्राः ।
वर्षन्तु हव्यभुजि साधु हवींषि विप्रा
वर्षन्तु चार्थिषु धनान्यमितानि भूपाः ॥

(रुक्मिणीहरण० ४।२९)

वरञ्च अत्र कविना इदमन्यदपि दर्शनमामेलितम् यद् विप्रा हव्यभुजि हवींषि वर्षन्तु ( यज्ञं कुर्वन्तु ), पयोदाश्च वारि वर्षन्तु, एवं सुकाले वर्त्तमान एव अमृताभ्यधिकं सूक्तं कवीन्द्रा वर्षन्तु ।

अपि च कालिदासोऽमन्यत—

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥

(रघुवंशम् १।२६)

अर्थात् आकाशलोकपृथिवीलोकयोः परस्परं विनिमयेन सम्यक् स्थितिर्वर्तते । यथा वारिवर्षया पृथिवीलोको हरितो भरितो भवति तथैव यज्ञवर्षया आकाश-

लोको द्युतिमान् भवति । अस्मिन् विषये वत्सराजः स्व-मतमतिस्फुटं प्रस्तौति—"न केवलं मेघानां वारिवर्षया अयं लोकः समुल्लसति वरञ्च इयमपि पृथिवी सा कादम्बिनी (मेघमाला) अस्ति या हव्यकव्यप्रवर्षणैरुर्ध्वस्थलोकान् प्रीणयति—

कादम्बिनी काचिदपूर्वरूपा
त्वमुर्वरे ! भूरिरसोपगूढा ।
उर्ध्वस्थलोकानपि हव्यकव्य-
प्रवर्षणैः प्रीणयसे तलस्था ।। (त्रिपुरदाहः १।३२)

शिवं प्रति दशार्णभूमेरयं कविः सैव श्रद्धा निगूहरति या श्रद्धा कालिदास-कृतिषु सर्वत्र विराजते । 'वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी' ति कालिदासस्य शिव एव वत्सराजस्यापि मोहध्वान्तप्रणाशं करोति—

मोहध्वान्तप्रणाशं मनसि च महतां शङ्कराद्वैतमास्तां
वाक्पीयूषप्रपाभिस्त्रिभुवनमनिशं मोदयन्तां कवीन्द्राः ।।
(किरातार्जुनीयः ६१)

चूडाचन्द्रावदातेन स्फुरद्वालाक्षिरोचिषा ।
निरस्तमोहतिमिरं त्वयाऽस्तु हृदयं सताम् ।। (त्रिपुरदाहः ४।२५)

शिवस्य महिम्ना ओतप्रोतहृदयः कविः रूपकेषु स्वस्य समाजस्य च शिव-मवेक्षते । प्राप्तप्रसङ्गः स हृदयेनोद्गिरति । क्वचित् समुद्रेण सह शिव उपमीयते—

गङ्गाधरो रुचिरशीतकराभिरामो
भालाक्षिवह्निनिभसम्भृतवाडवाग्निः ।
बिभ्रद्विषं सुविषमं गुणरत्नरम्यो
भर्गः समुद्र इव वर्द्धयतु श्रियं वः ।। (समुद्रमथन० १।१)

क्वचित् शिवार्चनायामर्पितं कुसुमं कल्पद्रुमीभवत् इव तस्मै प्रतिभाति—

परिकरितमिन्दुमौलेर्जयति शिरः स्वर्गवाहिनीसलिलैः।
यस्मिन्नुप्तं सद्यः कुसुमं कल्पद्रुमीभवति ॥

(त्रिपुरदाहः १।१)

लोकस्य नन्दन प्रार्थयन् स चन्द्रार्धचूडे निबिडानुरागरयानिवार्यतामपि प्रतिपादयति—

लोकः स नन्दतु पूर्णकामश्चन्द्रार्धचूडे निबिडानुरागः।
वर्षन्तु कामं सलिलं पयोदाः कृपार्द्रचित्ताः कनकं नरेन्द्राः ॥

(कर्पूरचरितभाणः ३२)

कविकर्मणः प्रशस्तिरपि तेन बहुधा गीयते—

वाक्पीयूषप्रपाभिस्त्रिभुवनमनिशं मोदयन्तां कवीन्द्राः ॥

(किरातुर्जनीय० ६१)

वर्षन्तु सूक्तममृताभ्यधिकं कवीन्द्राः। (रुक्मिणीहरण० ४।२६)
सारस्वतोत्सवमयाः कवयो भवन्तु ॥ (समुद्रमथन० ३।१४)

'सारस्वतोत्सवमयाः कवयो भवन्तु' इत्येतत्कथनेन मध्यदेशे प्राक्तनादारभ्य वर्तमानस्य कवि-सामाजस्यास्तित्वं जार्गात, नाट्यकारः शिष्टसमाजे कवित्वस्यादरं व्यनक्ति। एवंविध कविसमाजस्योल्लेखो वात्स्यायनकृतकामसूत्रे वर्तते,[1] अपि च काव्यादर्शस्य कर्त्ता आचार्यो दण्डी विदग्धगोष्ठ्यां (समाजे) कवित्वशक्तेरनिवार्यतां प्रतिपादयति।[2] वात्स्यायनस्य यः सरस्वती-

१. कामसूत्रम् १।४।१५
पक्षस्य मासस्य वा प्रज्ञातेऽहनि सरस्वत्या भवने नियुक्तानां नित्यं समाजः।

२. काव्यादर्शः १।१०५
तदस्ततन्द्रैरनिशं सरस्वती श्रमादुपास्या खलु कीर्तिमीप्सुभिः।
कृशेकवित्वेऽपि जनाः कृतश्रमा विदग्धगोष्ठीषु विहर्तुमीशते ॥

समाजः, दण्डिनो या विदग्धगोष्ठी इत्यनयोरवशिष्टां परम्परां वत्सराजस्य सारस्वतोत्सवो बिभर्ति। इत्थं कलारसिकानां, काव्यमर्मानुपिणां स्वाभिमानरक्षणक्षमाणाञ्च प्रतिनिधीभूतः कविर्वत्सराजः संस्कृतनाट्यसाहित्यस्येतिहासे गण्यते। मध्यदेशीयानां कलासाहित्यपरम्परायाश्च अन्तर्द्रष्टृषु एष विशिष्टं स्थानं दधाति। एष एव राजचरितमाश्रितवतीं नाट्यकलां पुनः तस्य जन्मस्थाने लोकभूमौ प्रतिष्ठातुमभिवर्तते।

परमर्दिदेवस्य पश्चादपि त्रैलोक्यवर्मदेवस्य राज्यपरिषदि एष अविद्यत, यतः किरातार्जुनीयव्यायोगस्याभिनयं कर्तुं त्रैलोक्यवर्मदेव आदिशति।[१] मन्यामहे त्रैलोक्यवर्मदेवस्यापि परिषदि कियत्कालम् अमात्यपदमयमलञ्चकार। त्रैलोक्यवर्मदेव ईस्वीवर्षेषु १२०२–१२४२ वर्षाणि कालञ्जरराज्यशासनं चकार। एतदधिकं वत्सराजस्य जीवनविषये विस्तरेण वक्तुं न शक्नुमः। किरातार्जुनीयव्यायोगे 'वीररसैकवासनावसितोऽयं कालञ्जराधिपतिस्त्रैलोक्यवर्मदेवः' इति कवि-कथनेन ज्ञायते यत् कुतुबुद्दीनात् परमर्दिदेवस्य पराजयानन्तरं त्रैलोक्यवर्मदेवनेतृत्वे चन्देलवीरा यदा तुर्केभ्यः कालञ्जरदुर्गं पुनः विजितवन्तस्तदैव विजयोत्साहावसरेऽस्य व्यायोगस्य रचना अभिनयनं चाभवताम्। अतएव कविः नान्दीषु त्रैलोक्यवर्मदेवस्य करवालं (खड्गं) प्रशंसति।[२]

## हास्यचूडामणिः प्रहसनम्

रूपकसङ्ग्रहेऽस्य पञ्चमः क्रमो वर्तते रूपकसङ्ग्रहस्य सम्पादकः श्रीचिमनलाल डी० दयाल, एम्०ए० महोदया आसन्। एष क्रमो न सम्यक् प्रतिभाति,

---

१. किरातार्जुनीयव्यायोगः

**भाव! वीररसैकवासनावासितोऽयं कालञ्जराधिपतिस्त्रैलोक्यवर्मदेवः कविवत्सराजविरचितं किरातार्जुनीयं नाम व्यायोगमभिनेतुमादिशति।**

२. किरातार्जुनीयव्यायोगः ३

**श्यामासवङ्गसुभगा करपङ्कजाग्रवुर्लालना विहरमाणमनोज्ञकाम्या।**
**त्रैलोक्यवर्मनृपतेर्मनसि प्रमोदमाविष्करोति करवाललता, न कान्ता॥**

यतः 'किरातार्जुनीय'—व्यायोगस्य त्रैलोक्यवर्मदेवस्य आदेशेन अभिनीतत्वाद् नियमेनैव तस्य रचनाक्रमे षष्ठं स्थान भवति, त्रैलोक्यवर्मदेवः परमर्दिदेवस्योत्तराधिकारी बभूव, अवशिष्टानि पञ्चरूपकाणि परमर्दिदेवपरिषदि अभिनीतानि बभूवुः, तेषु प्रणयनस्य कः क्रमो भवितं शक्यते, इति सूक्ष्मानुसन्धानस्य विषयः, यतो नाट्यरचनायां प्रवृत्तः कविः पञ्च रूपकभेदान् गृहीत्वा पञ्चैव कृतीः विरचयामास। यदा भेदमेकं गृहीत्वा द्वे रचने कृतेऽभवताम्, तदा अनयोः का प्रागभवत्, का च पश्चात् इति विभेदः सरलतया ज्ञातुं शक्यते।

श्री चिमनलाल डी० दयालमहोदयेन रूपकसङ्ग्रहस्य यः परिचयो दत्तः, तस्मिन् उल्लेखो वर्तते यदेतेषां रूपकाणां ताम्रपत्रेषु लिखिता हस्तलिपिर्गुर्जरप्रदेश एवोपलब्धाऽभवत्, तत्र एकस्यां प्रतौ रूपकचतुष्टयं निबद्धं जातम्—१. हास्यचूडामणिः, २. त्रिपुरदाहः ३. किरातार्जुनीयम्, ४. समुद्रमथनम्, अस्यां प्रतौ तावत् पत्राणां संख्या १—१८३ मिता वर्तते, द्वितीयायां प्रतौ च १. कर्पूरचरित भाणः २. रुक्मिणीहरणं च वर्तेते अस्यां पत्राणां गणना रूपकक्रमेण विभक्ता १—१८, १—३९ अङ्किताऽस्ति। ताडपत्राणामाकारश्च १४"×१½" आयतः, तेषु पङ्क्तयः तिस्रः चतस्रो वा, प्रतिपाङ्क्ति ५० पञ्चाशदक्षराणि लिखितानि सन्ति। दलालमहोदयस्य मतेन ताडपत्रस्येयं पाण्डुलिपिः ईस्वीत्रयोदशशताब्द्या अन्तिमे भागे प्रतिलिपि सनाथाऽबभत्। 'हास्यचूडामणिप्रहसनस्य' अन्या हस्तलिपिरपि उपलब्धा भवति या दकनकालेजस्य सङ्ग्रहे वर्तते, अस्या लिपिकालः ईस्वीसप्तदशशताब्द्या मध्यभागो निश्चीयते। हास्यचूडामणेः द्वे हस्तलिपी प्राप्नुमः, इति एतस्या नाट्यरचनाया जनेषु प्रियत्वं सिद्ध्यति।

प्रागेवास्माभिः कथनमुपन्यस्तमस्ति यद् लोकवृत्तानुकरणमेव नाट्यस्य प्रकृतिरुद्भवभूमिश्च। एतद्दृष्ट्या प्रहसनं नाम रूपकं नाट्यस्थ प्रथमोन्मीलनमिति मन्तुं शक्यते।

प्रहसनस्य लक्षणं दशरूपके त्वित्थमस्ति—

तद्वत्प्रहसनं त्रेधा शुद्धवैकृतसङ्करैः।

(तद्वदिति—भाणवद्—वस्तु—सन्धि—सन्ध्यङ्ग लास्यादीनामतिदेशः)

तत्र शुद्धं तावत्— पाखण्डिविप्रप्रभृतिचेटचेटीविटाकुलम्
चेष्टितं वेषभाषाभिः शुद्धं हास्यवचोऽन्वितम् ।
विकृतं तु— कामुकादिवचोवेषैः षण्ढकञ्चुकितापसैः ।।
विकृतं, सङ्करात् वीथ्या सङ्कीर्णं धूर्तसङ्कुलम् ।
(दशरूपकम् ३।५४–५६)

भाणवत् प्रहसनं भवति अतो भाणस्यापि लक्षण-वस्तु द्रष्टव्यम्—

भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा ।
यत्रोपवर्णयेदेको निपुणः पण्डितो विटः ।। (दश० ३।४९)

भाणवद् इति परिभाषयाऽत्रायं तात्पर्यार्थो यत् भाण–प्रहसन–रूपकद्वयेऽपि कथावस्तुनोऽन्तःस्वरूपं पाखण्डहास्यसंयुतं समानमेव भवति, पात्राणां प्रकृतिरपि समानैव भवति, तत्रापि धूर्तचरितानि पात्राणि भवन्ति अत्रापि तथैव । अभिनयप्रकारस्तु भिन्नो भवति, भाणस्याभिनयनं संवादमुखेन आकाशभाषितविधिमाश्रित्य प्रवर्तते, प्रहसनस्याभिनयप्रकारः कार्यव्यापारमुखेन रूपकस्य प्रत्यक्षविधिमाधृत्य विलसति ।

हास्यचूडामणिप्रहसनस्य तु कथावस्तुनि हास्यमुखेन तत्कालीने समाजे वैष्णवानां पाखण्डोद्भेदनं भवति । ते कथम्प्रकारा अर्थलोलुपा कामुकाश्च भवन्ति, अस्मिन् प्रहसने तदपि प्रकटीभवति । किन्तु प्राधान्येन विनोदस्य कौतुकस्य चाभिव्यक्तिरेवास्योद्देश्यम्, येन मन आनन्दमग्नं जायताम् । पाखण्डी वैष्णवो ज्ञानराशिः, तस्य शिष्यो धूर्तः कौण्डिन्यश्च द्वावपि प्रहसनस्य विधेयभूतौ । ज्ञानराशिः विंशतिपर्यन्तां गणनामपि न जानाति, कौण्डिन्यः श्लोकस्य शुद्धपठनेऽपि अक्षमोऽस्ति । मदनसुन्दर्याः प्रणयी द्यूतकरः कलाकरण्डकोऽत्यन्धभक्तो वर्तते । कलाकरण्डकस्य सेवकौ कोकिलपारावतौ ज्ञानराशेः पाखण्डभेदकौ चास्ताम् । प्रहसनस्यारम्भो महता कौतुकेन भवति, कपटकेल्याः गृहे धनं चोरितं जातम्, सा सेवकेन सह ज्ञानराशेरन्तिकं गतवती, तया चोरितधनस्य प्रश्नः कृतः,

अनन्तरं पदे-पदे ज्ञानराशेः कौण्डिन्यस्य च पाखण्डोद्भेदनमस्मान् मोदयति। प्रहसनस्य समाप्तिः कलाकण्डकस्यागमनेन सुखान्ता जाता।

प्रहसनस्य कथावस्तु प्रायेणैकस्मिन् अङ्के निबद्धा भवति। अस्मिन् प्रहसने यद्यपि द्वौ अङ्कौन लिखितौ वर्तेते, प्रहसनस्यमध्ये 'प्रथमोऽङ्कः' इति उल्लेखो वर्तते, अन्ते च न किमपि। तथापि अनुमीयते यत् 'प्रथमोऽङ्कः' इत्यस्य स्थाने 'इति प्रथमोऽङ्कः' इत्युल्लेखः सम्यक् प्रतिभाति, पाण्डुलिपिप्रतौ केनापि कारणेन एषा त्रुटिरजायत। यतः 'प्रथमोऽङ्कः' इत्युल्लेखानन्तरं दृश्यं परिवर्तते, द्वे दृश्ये वर्तमाने कथावस्तुनोऽङ्कद्वये विभागो युज्यते।

• अस्मिन् प्रहसने प्रयुक्ता प्राकृतभाषा अधुनातनस्य बुन्देलखण्डभूभागस्य भाषाणां जननी अस्ति, शौरसेनी प्राकृतस्योपभेदे गण्यते सा। वत्सराजेन प्रयुक्तायामस्यां एवंविधाः शब्दाः वर्तन्ते येषां प्रयोगे एषा आञ्चलिकत्वमाप्नोति, स्वभावतः तदानीन्तने देशभाषायां प्रयुक्ता शब्दा अपि संवादे प्रापतन्। यथा—वोलीणा ( पृ० ४ ), मुसिदं ( पृ० ६ ) कट्टुअक्खरं ( पृ० ११ ), णाणमाहप्पं ( पृ० १२ ), किलम्मदि ( पृ० २१ ), चिअ ( पृ० ३२ ), ढ्ढिद ( ३२ ), दालिद्दद्दूमिओ ( पृ० ३३ अदलिद्दे (पृ० ३३), किम्पि ( पृ० ३५ ) अंचिअ ( पृ० ३६ ) मुहअंदा ( पृ० ३८ ) माणेम्ह ( पृ० ४० )। श्री दलालमहोदयेन अस्य प्राकृतस्य संस्कृतच्छायाकरणे यत्र-तत्र भ्रमोऽपि व्यधायि, मया तु संस्कृतच्छायायाः पुनस्सम्पादनं विहितमस्ति। उदाहरणं यथा 'वोलीणा' इत्यस्य संस्कृतं श्रीदलालमहोदयः 'व्युत्क्रान्ता' इत्येवं कृतवानासीत्, किन्तु 'व्युत्क्रान्ता' इति शब्दः 'वोलीणा' इत्यस्य पर्यायो, न तु छाया। छाया तु वि+उत्+लूना =व्युल्लूना। 'वोलीणा' शब्दस्य भाषायां 'कट गयी' एवंविधोऽर्थो भवति, तस्य सम्यक्संगतिः 'कधं मह मङरापाणभरालसाए एक्कणिद्दापय्येव रअणी 'वोलीणा' इत्यास्मिन् वाक्ये प्रतिभाति।

आशासे प्रहसनस्यास्य सम्पादितं नूतनं संस्करणं पाठकानां प्रियत्वं प्राप्स्यति।

दारागंज—प्रयागः
चैत्र १५, २०२७

जयशङ्कर त्रिपाठी

# पात्र-सूची

## पुरुषाः

सूत्रधारः—
पारिपार्श्वकः— } **अभिनय-व्यवस्थापकौ ।**

ज्ञानराशिः—**केवलीविद्यायाः पण्डितः, पाखण्डी वैष्णवः ।**

कौण्डिन्यः—**ज्ञानराशेः धूर्तः शिष्यः ।**

कलाकरण्डकः—**द्यूतकरः, युवा, मदनसुन्दर्याः प्रणयी ।**

कोकिलः—
पारावतः— } **कपटकेल्याः कुटुम्बसदस्यौ ।**

मुद्गरकः—**कपटकेल्याः चेटः (सेवकः) ।**

## स्त्रियः

कपटकेलिः—**नगरवेश्या ।**

मदनसुन्दरी—**कपटकेल्याः पुत्री ।**

कुसुमिका—**कपटकेल्याः चेटी ।**
**मदनसुन्दर्याः चेटी च ।**

# SANGAMANI

( Sanskrit Quarterly Magazine )

Edited by—Prabhat Shastri Sahityacharya

Annual Subscription—

Rs. Twelve }
Per copy - Rs. 3/50 } In Foreign

---

## 'संगमनी'-विवरणम्

| | | |
|---|---|---|
| १. | प्रकाशनस्थानम् | दारागंज-प्रयाग: ६ |
| २. | प्रकाशनकालावधि: | त्रैमासिकी |
| ३. | सङ्केतेन सह मुद्रकस्य नाम नागरिकता च | प्रभात शास्त्री |
| ४. | सङ्केतेन सह प्रकाशकस्य नाम नागरिकता च | भारतीय: |
| ५. | सङ्केतेन सह सम्पादकस्य नाम नागरिकता च | दारागंज-प्रयाग:-६ |
| ६. | पत्राधिकारिणां नाम्ना सह सङ्केत: | प्रभात शास्त्री<br>संस्कृत-साहित्य-परिषद्<br>प्रयाग: |

प्रभात शास्त्री नामाहं उद्घोषयामि उपरिलिखितं सकलमपि विवरणं मम मतौ सत्यमस्ति ।

ह० प्रभात शास्त्री
संगमन्या: सम्पादक:
प्रकाशक:, मुद्रकश्च

Published by Prabhat Shastri for Sanskrit Sahitya Parishad Daraganj, Allahabad-6 ( India ) and Printed by him at Devavani Mudranalaya, Allahabad-6 (India).